कारणे लयप्रदर्शनं चानुकूलं स्यात् । उपास्यस्य परायणत्वप्रदर्शनं च ब्रह्मण्येव समञ्जसम् । श्रुत्यन्तरं च स्पष्टं ब्रह्मण एव परायणत्वं दर्शयति "विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायण"मिति । रातेः धनस्य दातुर्यजमानस्य । "राति"रिति पाठे रातिर्बन्धुरित्यर्थः । किञ्च "स एष परोवरीयानुद्गीथः स एषोऽनन्त" इत्युद्गीथ आकाशरूपदेवताधर्मान्परत्वादीनुपसंहरति जैवलिः । तद्भूताकाशे न युज्यते । न हि तस्यानन्त्यं सम्भवति । श्रुतौ परत्वं गुणत उत्कृष्टत्वं वरीयस्त्वं कालतो वस्तुतश्चापरिच्छिन्नत्वमनन्तत्वं देशतोऽपरिच्छिन्नत्वं प्रपूरणम् । यत्तु लिङ्गाच्छ्रुतिर्बलीयसीति, तन्न । "त्यजेदेकं कुलस्यार्थे" इति न्यायेन बहूनामनन्यथासिद्धलिङ्गश्रुतीनामनुग्रहार्थैकस्या आकाशश्रुतेर्योगस्य युक्तत्वात् । तस्मादाकाशशब्दं ब्रह्मैवात्र देवतोद्गीथ उपास्यमिति सिद्धम् ॥

अत एव प्राणः ॥ १ । १ । २३ ॥

अत्र नातिदेशत्वात् पृथक्सङ्गत्यपेक्षा । यद्वा पूर्वमाकाशश्रुतेरव्यभिचारिब्रह्मलिङ्गोपबृंहितत्वाद्ब्रह्मपरत्वमुक्तं, इह तु श्रूयमाणस्य प्रवेशनादिलिङ्गस्य प्राणेऽपि सम्भवेनाव्यभिचारिब्रह्मलिङ्गसद्भावादाकाशवत्प्राणश्रुतिर्न ब्रह्मपरेति युक्तम् इति प्रत्युदाहरणसङ्गतिः । तत्रैवाकाशवाक्यानन्तरं श्रूयते उद्गीथे "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ते"त्यादि । अस्यार्थः । उद्गीथाधिकारे भाक्तिकं प्रस्तावव्याख्यानमिति पञ्चश्रुतीय इत्युक्तमेव कश्चिदविद्वा-

कायणनामा धनाय राज्ञोयज्ञं गत्वाज्ञानवैभवं स्वस्य प्रकटयन्प्रस्तोतारमुवाच। हे प्रस्तोतर्यादेवता प्रस्तावं सामभक्तिविशेषमन्वायत्ताऽनुगता सा। प्रस्तोताऽधीतस्तस्माकायणं पप्रच्छ "कतमे"ति। तस्य प्रतिवचनं "प्राण" इति। मुख्यप्राणवायुं व्यावर्तयति "सर्वाणी"ति। सम्विशन्ति लीनानि भवन्तिलयकाले। अभ्युज्जिहते जन्मकाले प्राणमभिलक्ष्योद्गच्छन्तीति। तत्र "प्राणबन्धनं हि सौम्य मनः प्राणस्य प्राण"मित्यादौ ब्रह्मणि प्राणशब्दप्रयोगात्प्राणवायौ च प्रसिद्धतरत्वात्संशयः, किमत्रप्राणशब्देन ब्रह्माभिधीयत उतवायुविकार इति। मनः शब्दलक्षितं तस्साक्षिचैतन्यं प्राणं परसिद्धैक्येनस्थितमित्यर्थः। प्राणस्य पञ्चवृत्तेर्वायुविकारस्य प्राणसत्तास्फूर्तिदमात्मानं येविदुस्ते ब्रह्म जानन्तीत्यर्थः। तत्र प्रसिद्धिबलाद्वायुविकारइति प्राप्त आकाशन्यायमतिदिशति भगवान्सूत्रकारो ऽ"त एव प्राण" इति। अत एव पूर्वसूत्रोक्त"तल्लिङ्गा"दिति हेतोरेव प्राणशब्दं ब्रह्मेत्यर्थः "सर्वाणिह्वा इमानि भूतानि प्राणमेवाभिसम्विशन्ती"त्यादिना महाभूतसम्वेशनादिकं ब्रह्मलिङ्गं प्राणवाक्ये श्रूयते। न चवै "यदा पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं मनः प्राणं श्रोत्रं स यदा प्रतिबुध्यते प्राणादेवाधि पुनर्जायन्त" इति श्रुत्या वायुविकारेऽपि सम्वेशनादि श्रूयत इति वाच्यम्। न हि तत्र महाभतसम्वेशनादि श्रूयते, किन्त्विन्द्रियसंवेशनादिकमेव। श्रुत्यर्थस्तु। तर्हि तस्यां सुषुप्त्यवस्थायामित्यर्थः। वाक्पदमनुक्तकर्मेन्द्रियलक्षकम्। चक्षुः श्रोत्रे धीन्द्रियाणामुपलक्षणम्। तस्मादनन्यथासिद्धब्रह्मलिङ्गात्प्राण शब्दवाच्यं ब्रह्मैवेत्यौस्त्यं प्रस्तावे देवतेति सिद्धम्॥

## ज्योतिश्चरणाभिधानात् ॥ १ । १ । २४ ॥

पूर्वं प्राणवाक्ये ब्रह्मलिङ्गसत्त्वाद्भवतु ब्रह्मपरता। इहास्य वाक्ये तदभावान्न ब्रह्मपरतेति प्रत्युदाहरणसङ्गत्येदमारभ्यते। छान्दोग्ये श्रूयते "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योति"रिति। अस्यार्थः। गायत्र्युपाधिब्रह्मोपास्त्यनन्तरमुपास्त्यन्तरोक्त्यर्थोऽथशब्दः। अतो दिवो द्युलोकात्परः परस्ताद्यज्ज्योतिर्दीप्यते तदिदमित्यौदरज्योतिष्यध्यस्यते। कुत्र तद्दीप्यते तत्राह "विश्वत" इति। विश्वस्मात्प्राणिवर्गादुपरीत्यर्थः। विश्वशब्दस्य कतिपयार्थकत्वं व्यावर्तयति "सर्वत" इति। सर्वस्माद्भूरादिलोकात्सर्वसंसारमण्डलादुपरीत्यर्थः। उत्तमा न विद्यन्ते येभ्यस्तेऽनुत्तमास्तेषु। इदंशब्दार्थं स्फुटयति "यदि"ति। लोकवेदयोर्भौतिकतेजसि ब्रह्मणि च प्रयोगात्संशयः, किमिह ज्योतिश्शब्देनादित्यादिकं तेजोऽभिधीयत उत ब्रह्मेति। किन्तावदत्र युक्तः। भौतिकमिति। कुतः। प्रसिद्धत्वा "दतो दिव" इत्यादिना मर्यादादिश्रवणाच्च। न हि सर्वव्यापिनो ब्रह्मणो मर्यादादिकं युक्तम्। तस्माद्भौतिकं ज्योतिरिति प्राप्ते ब्रूमो "ज्योतिश्चरणाभिधाना"दिति। अत्र ज्योतिश्शब्दग्राह्यं ब्रह्मैव। कुतः। चरणाभिधानात्पादाभिधानादित्यर्थः। तथा हि ज्योतिर्वाक्यात्पूर्ववाक्ये चतुष्पाद्ब्रह्म निर्दिश्यते "तावानस्य महिमा ततो ज्यायांश्च पूरुषः पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी"ति। एतदर्थस्तु। "गायत्री वा इदं सर्व"मित्यत्र भूतपृथिवीशरीरहृदयवाक्प्राणैः षड्विधा चतुष्पदा गायत्रीति यदुक्तं तद्गायत्र्युपाधिब्रह्मणो महिमा विभूतिस्तावान्यावानयं प्रपञ्चः। स्वयं

पुरुषस्ततोज्यायान्। तदेवाह"पाद"इति । सर्वाणिभूता-न्यस्यैकः पादएकदेशः । त्रिपादमृतं दिविद्योतनवति स्वात्मनि स्थितमिति॥ एवं च "यदतः पर" इत्यत्र यच्छ-ब्दस्य सर्वनामत्वेन प्रसिद्धार्थवाचकत्वात्पूर्ववाक्ये द्युस-म्बन्धित्वेन प्रसिद्धं ब्रह्मात्रापि द्युसम्बन्धाद्यच्छब्देनप्रत्य-भिज्ञायते, न प्रकृत लौकिक तेजः । "अतः पर" इत्यादिना श्रुत ब्रह्मणोमर्यादादिकमुपासनार्थमित्युक्तम् । ज्योति-श्शब्दो ब्रह्मण्यपि प्रसिद्धो वेदान्तेषु । तस्मादिह ज्योति-श्शब्दं ब्रह्म ॥

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनि-गदात्तथा हि दर्शनम् ॥ १ । १ । २५ ॥

यदुक्त सर्वत्रगायत्र्याख्यच्छन्द उपाधिकब्रह्मण उक्त-त्वात्तदत्र प्रत्यभिज्ञायत इति तन्न, "गायत्रीवा इदं सर्वं भूत यदिद किञ्चे ति गायत्र्याख्यच्छन्दसः प्रकृतत्वा-त्तस्यैव "पादोऽस्य विश्वाभूतानी"ति भूतपादव्यपदेशो न ब्रह्मण इति । पूर्ववाक्ये छन्द एवाभिधीयते नब्रह्मेति चेन्न, गायत्र्याख्यच्छन्दोद्वारेण तदनुगतब्रह्मणिसर्वात्मकत्वं म-तिपाद्यते । "गायत्री वा इद सर्व"मित्यादिना न ह्यक्षरस-न्निवेशमात्राया गायत्र्याः सर्वात्मकत्वं समञ्जसम् । तस्मा-द्गायत्र्यां विकारे यदनुगतं ब्रह्म तदेव"गायत्री वा इदं सर्व" मित्यादिना प्रतिपाद्यत इति । निष्कृष्टार्थस्तु । छन्दोऽभि-धानाद्गायत्र्याख्यच्छन्दस एवपूर्ववाक्ये प्रकृतत्वान्न ब्रह्म-णः प्रकृतत्वमिति चेन्न । कुतः । तथा छन्दोद्वारेण तद्गते ब्रह्मणि चेतोऽर्पणस्य चित्तसमाधानस्य निगदादभिधानात्। तत्र दृष्टान्तः ।तथा हि.दर्शनम् । अन्यत्राऽपि विकारद्वा-

रेण ब्रह्मोपासनं दृश्यतइति। दर्शनं दृष्टमित्यर्थः। "एतं ह्येव बह्वृचा महत्युक्थेमीमांसन्तएतमग्नावध्वर्यवएतं महाव्रते छन्दोगा" इति। तदर्थस्तु। एतमेवात्मानमृग्वेदिनो महत्युक्थे प्रधाने शास्त्रे तदनुगतमुपासते,यजुर्वेदिनोऽग्नौक्रतौ, सामवेदिनो महाव्रताख्येक्रतौ तदनुगतं ब्रह्मानुसन्दधतइत्यैतरेये दृष्टमित्यर्थः। एवं गायत्रीशब्दो ब्रह्मलक्षकइति पूर्ववाक्ये ब्रह्मनिर्दिष्टम्। यद्वागायत्रीशब्दो ब्रह्मणि गौणः। तथा च सूत्रे सिद्धान्तभागस्यायमर्थः। यथा गायत्री षडक्षरैः पादैश्चतुष्पादेवं ब्रह्माऽपि चतुष्पादिति गायत्रीशब्देनाभिधीयते। चतुष्पात्त्वं गुणयोगात्। तथा गायत्री सादृश्येना चेतोऽर्पणस्य ध्यानस्य निगदाद्भिधानादिति।"तथा हि दर्शन" मिति छन्दोऽभिधायिशब्दस्य सादृश्यादन्यत्र प्रयोगे दृष्टान्तः।तथा हि "ते वा एते पञ्चान्ये पञ्चान्येदश सन्तस्तत्कृत" मित्युपक्रम्याह"सैषा विराडि"ति। अस्यार्थः। संवर्गविद्यायामधिदैवमग्निसूर्यचन्द्राम्भांसि वायौलीयन्तेऽध्यात्मं प्राणे वाक्चक्षुः श्रोत्रमनांसीत्युक्तम्। ते वायुना सहपञ्चाधिदैविका अध्यात्मिकेभ्यः प्राणादिभ्योऽन्ये, तथा प्राणादयः पञ्चाधिदैविकेभ्योऽन्ये। एवं ते सर्वे दश सन्तः कृतमित्युच्यन्ते । कृतापरपर्यायचतुरायनामकद्यूतगतचतुरङ्कयचत्वारः पदार्थाः प्रकृते सन्ति, त्र्यङ्कायवत्त्रयो, द्व्यङ्कायवद्द्वौ, एकाङ्कायवदेकश्च। एवं कृतेदशके सर्वान्तर्भावात्सत्रये सर्वजयो भवति। यथा कृतेजिते त्रेतादिसंज्ञानित्र्यङ्कायादीनिजितानि भवन्ति, तद्वत्तत्र चतुरायकापरपर्याय चतुरङ्कायनामकद्यूतस्य कृतमिति संज्ञा। स च चतुरङ्कायोदशात्मकश्चतुर्ष्वङ्केषु त्रयाणां, त्रिषु द्वयो, स्त्रयोरेकस्य चान्तर्भावात्। वाय्वादयोऽपि दश। तथा

च दशत्वसंख्यासादृश्यात्स्वादयः कृतमित्युच्यन्ते । एवमेव "दशाक्षरा विरा"डिति श्रुत्या "विराट्" नामकच्छन्दसो दशात्मकत्वात्स्वादौ विराट्शब्दप्रयोग इति यथा तद्वद्ब्रह्मणश्चतुष्पात्त्वसाम्याद्गायत्रीशब्दप्रयोग इति दृष्टान्तार्थः । तस्मात्पूर्ववाक्ये ब्रह्मैव निर्दिष्टं न च्छन्द इति सिद्धम् ॥

**भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १ । १ । २६ ॥**

इतश्च गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यमित्यभ्युपगन्तव्यमि 'त्येव' शब्दार्थः । कुतः । भूतादिपादव्यपदेशोपपत्तेः । भूतपृथिवीशरीरहृदयैश्चतुष्पदा गायत्रीति व्यपदेशस्य ब्रह्मण्येवोपपत्तेरित्यर्थः । न ह्यक्षरसन्निवेशरूपगायत्र्यां भूतादिपादव्यपदेशः सम्भवति । किञ्च "ते वा एते पञ्च ब्रह्मपुरुषा" इति श्रुतिः पूर्वं ब्रह्मणः प्रकृतत्वे सङ्गच्छते । तथा हि गायत्र्याख्य ब्रह्मणो हार्दस्योपास्त्यङ्गत्वेन द्वारपालादिगुणविध्यर्थं "तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषय इत्यादि वाक्यम् । तत्र "ते वा एते पञ्च ब्रह्मपुरुषा' इति श्रुतम् । तथा चोपास्त्यङ्गानां द्वारपालानां हृदयच्छिद्रेषु स्थितानां प्राणादिवायूनां ब्रह्मपुरुषत्वोक्ते हृदयच्छिद्रेष्वपि ब्रह्मसम्बन्धोऽवगम्यत इत्यतोऽस्ति पूर्ववाक्ये ब्रह्मप्रकृतम् । न हि गायत्रीमात्रस्यैवोपास्यत्वे तदङ्गानां ब्रह्मपुरुषत्वं युक्तम् । अतो हृदयच्छिद्रेषु ब्रह्मसम्बन्धात्तत्रस्थवायूनां ब्रह्मपुरुषत्वमिति ब्रह्मपुरुषश्रुत्युपपत्ते रिति । श्रुत्यर्थस्तु । हृदयस्य पञ्चदेवच्छिद्राणि । आदित्यादिनामकैः प्राणादिवायुभिर्देवैः परिपाल्यत्वाद्देव सुषित्वं छिद्राणामुपवर्ण्यते । तानि हृदयच्छिद्राणि हृदयस्य प्राङ्मुखदक्षिणमुखप्रत्यङ्मुखोदङ्मुखोर्ध्वमुखरूपाणि ।

स्वातन्त्र्यं जनकत्वेन, वाक्यार्थप्रतीतेर्गुणत्वं तज्जन्यत्वेनेति बोध्यम् । अस्तिकौषीतकीब्राह्मणोपनिषदि "इन्द्रप्रतर्दनाख्यापि का प्रतर्दनो हवैदैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण चे"त्यारभ्याम्नाता । तस्यां श्रूयते "सहोवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्वे"ति । तथोत्तरत्रापि "अथ खलुप्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति तथा न वाचं विजिज्ञासीत वक्तारं विद्या"दित्यादि । अन्ते च "स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत"इत्यादि । अस्यार्थः । दिवोदासस्यापत्यं पुमान्दैवोदासिः प्रियं प्रेमास्पदं धामगृहम् । तद्गतौ हेतु 'र्युद्धेने'ति । तत्कारणेन पुरुषकारप्रदर्शनेन च प्रतर्दनो राजेन्द्रस्य गृहं जगामेत्यन्वयः । तं दृष्ट्वेन्द्रउवाच "प्रतर्दन वरन्ते ददामि" । सहोवाच प्रतर्दनो "हे इन्द्र त्वमेववरं वृणीष्वयं त्वं मनुष्यायहिततमं मन्यस" इति । तत इन्द्र उवाच "प्राणोऽस्मी"ति । मुख्यप्राणं व्यावर्तयति "प्रज्ञात्मे"ति । निर्विशेषचिन्मात्रं व्यावर्तयति "तं मा" मिति । इदं च प्राणस्येदंरूपदेवतात्वेलिङ्गम् । प्राणस्य मुख्यप्राणरूपत्वेलिङ्ग "मथ खल्वि"त्यादि । वागादीनां देहधारणशक्त्यभावनिश्चयानन्तर्य "मथ" शब्दार्थः । प्राणवायोर्देहधारणं तदुत्थापनं च कार्यमिति प्रसिद्धमिति "खल्वि"त्युक्तम । प्राणस्य जीवत्वेलिङ्गं "न वाच"मिति । प्राणस्य परमात्मत्वेलिङ्गं "स एष" इत्यादि । एवं च प्राणशब्दस्येन्द्रप्राणवायुजीवपरमात्वपरत्वेन लिङ्गानां विद्यमानत्वात्संशयः किंपरः प्राणशब्द इति । तत्र प्रसिद्धत्वात्प्राणवायुपर इति प्राप्त उच्यते "प्राणस्तथाऽनुगमात्" । तत्र प्राणो ब्रह्मैव । कुतः । तथाऽनुगमात्तथा

ब्रह्मपरत्वेनाऽनुगमात् । अवगमादित्यर्थः । तथाहि प्रतर्दनः खलु हिततमं पुरुषार्थं पृष्टवान् । तस्य परमपुरुषार्थकामस्य प्राण उपास्यत्वेनोपदिश्यते "प्राणोऽस्मी"त्यादिना । एवं च परमपुरुषार्थत्वेनोपदिश्यमानः प्राणः कथं प्राणवायुः स्यात् । तथा "सयो हमां वेद न ह वै तस्य केन च न कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यये"त्यादिब्रह्मपरिग्रहे घटते, "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इत्यादिना ब्रह्मज्ञानिनः कर्मक्षयश्रवणात् । तदर्थस्तु योऽधिकारी मां ब्रह्मरूपं साक्षादनुभवति तस्य विदुषो लोको मोक्षो न मीयते न हिंस्यते महतापि पापेन, ज्ञानमाहात्म्येन सर्वस्यापि पापस्य दग्धत्वादिति भावः । एवं प्रज्ञात्मत्वं च ब्रह्मण एव युक्तम् । एवमुपसंहार "आनन्दोऽजर" इत्यपि ब्रह्मपरत्वे घटते । तथा "स न साधुना कर्मणा भूयान्भवति नो एवासाधुना कनीयानेष ह्येव साधु कर्म कारयत्येष एवासाधु कर्म कारयत्येष लोकाधिपतिरेष लोकपाल एष लोकेश" इति च ब्रह्मण्येव समञ्जसम् । अत्र हि धर्मोपसंस्पृष्टत्वं तत्कारयितृत्वं तदीशितृत्वं च ब्रह्मणोऽसाधारणं लिङ्गमस्तीति । तस्मात्पूर्वपरपर्यालोचनया ब्रह्मपरमेव प्राणपदमिति ॥

न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ १ । १ । २९ ॥

ननु यदुक्तं प्राणो ब्रह्मेति तदयुक्तमिति नञर्थः । कुतः । वक्तुरात्मोपदेशाद्वक्तुरिन्द्रस्यात्मत्वेनोपदेशादित्यर्थः । तथाहि । वक्ता हीन्द्रो नाम कश्चिद्विग्रहवान्देवताविशेषः स्वमात्मानं प्रतर्दनायोपदिशति "मा मेव

विजानी ही''त्युपक्रम्य ''प्राणोऽस्मिप्रज्ञात्मे''त्यहङ्कारवादेन । किञ्च देवतायाः प्राणत्वे लिङ्गान्तरमस्ति ''अरुन्मुखान्यतीन् शालावृकेभ्यः प्रायच्छ''मिति । ''रुन्''वेदान्तवाक्यं तद्येषां मुखे न वर्तते तेऽरुन्मुखाः । शालावृकेभ्योऽरण्यश्वभ्यः । न हीदं ब्रह्मणो युक्तम् । एवमिन्द्रपरत्व इतरच्चधासम्बन्धं योजनीयमिति । अत्रोच्यते ''अध्यात्मसम्बन्धभूमाह्यस्मि''न्निति । हि यस्मादस्मिन्नध्यायेऽध्यात्मसम्बन्धस्य भूमाबाहुल्यमुपलभ्यत इत्यर्थः । तद्यथा ''यावद्ध्यस्मिन् शरीरे प्राणोवसति तावदायु''रिति प्राणस्यैव प्रज्ञात्मनः परमात्मभूतस्यायुःप्रदानोपसंहारयोः स्वातन्त्र्यं दर्शयति, न पराचीनस्येन्द्रस्य । एवमस्ति वे ''प्राणानां निःश्रेयस'' मिति श्रुतिरात्मानमिन्द्रियाश्रयं प्राणं दर्शयति । प्राणस्यास्तित्वे स्थितौ प्राणानामिन्द्रियाणां निःश्रेयसंस्थितिरिति श्रुत्यर्थः । एवमेव 'न वाचं विजिज्ञासीत वक्तारं विद्या दिति परमात्मानं वक्तारमुपक्रम्य ''तद्यथारथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत'' इति वाक्यं विषयेन्द्रियव्यवहारानभिभूतं प्रत्यगात्मानमेवोपसंहरति । श्रुत्यर्थस्तु । तत्तत्र भूतमात्रादीनां नानात्वं नेत्यर्थेदृष्टान्तः । यथालोके प्रसिद्धस्य रथस्यारेषु मध्यवर्तिषुशलाकासु चक्रोपान्तनेमिरर्पिता, नाभौचक्रपिण्डकायामरा अर्पितास्तद्वद्भूतानि पृथिव्यादीनि । मात्राः शब्दादयो विषयाः । मीयन्त इति मात्राः । प्रज्ञामात्रासुस्वस्वबोधकेष्विन्द्रियेषु बुद्धिद्वाराऽर्पिताः । कर्मेन्द्रियेष्वपि तद्विषया अर्पितास्तदधीनत्वात्तद्व्यवहारस्य । ताश्च प्रज्ञा-

मात्राः प्राणे परस्मिन्नर्पिताः । प्राणस्य ब्रह्मत्वे लिङ्गं "स एष" इति । तस्मादध्यात्मसम्बन्धबाहुल्यादध्यात्मब्रह्मोपदेश एवायं न देवतात्मोपदेश इति सिद्धम् ॥

कथं तर्हि वक्तुरात्मोपदेश इत्याशङ्क्याह ।

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ १ । १ । ३० ॥**

इन्द्रस्य वक्तुर्मामेव विजानीहि त्युपदेशः शास्त्रदृष्ट्या ज्ञातव्यः । अहमेव परंब्रह्मेति शास्त्रदृष्ट्या पश्यन्नेवमुक्तवानित्यर्थः । "वामदेववदि"ति । यथा वामदेवः शास्त्रदृष्ट्या "अहं मनुरभवं सूर्यश्चे"त्याह तद्वदित्यर्थः । यदुक्तं "मिन्द्रोपलो" नित्यादिदेवतापरत्वे लिङ्गमिति, तन्न । यद्वेदान्तवाक्योत्थज्ञानप्रभावादहमेवं भूतोऽस्मीतीन्द्रस्य वेदान्तवाक्यान्यध्येयानि, नोचेदरण्यपरवान्यः प्रत्यक्ष-मित्येतदर्थकत्वेनाविरोधात् । तस्मात्प्राणात्मकब्रह्मपरमेतद्वाक्यमिति सिद्धम् ॥

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ १ । १ । ३१ ॥**

ननु यदुक्तमध्यात्मसम्बन्धबाहुल्याद देवतात्मा प्राण इति तत्सत्यम् । तथापि न ब्रह्मपरमेवेदं वाक्यं किं तु जीवमुख्य प्राणवायुपरमपि । कुतः । जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च । " न वाच्यं विजिज्ञासीत वक्तारं विद्या-दि " ति जीवलिङ्गं वागादिकरणैर्व्याप्तस्य वक्तुर्जीवस्य सुविशेषत्व पलभ्यते । एवं " प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती." ति प्राणलिङ्गं, देहधारणस्य प्राणलिङ्गत्वात्-। तथा हि प्राणसंवादे श्रूयते ।

वागादयस्सर्वे प्राणाः प्रत्येकं श्रेष्ठतामात्मनो मन्यमानास्तन्निर्धारयिषया प्रजापतिमुपजग्मुः । स च तानुवाच "यस्मिन्नुत्क्रान्ते शरीरं पापिष्ठतरमिव भवति सयुष्माकं मध्ये श्रेष्ठ" इति । तस्मिन्प्रजापतावेवमुक्तवति वागादिषूत्क्रान्तेष्वपि मूकादिभावं शरीरं स्वस्थमस्थात् । मुख्यप्राणस्योच्चिक्रमिषायां तु वागादीनां व्याकुलत्वात्तान्प्रति प्राण उवाच "मा मोहमापद्यथ यतोऽहमेवैतत्करोमि" । किं तत् । पञ्चधा प्राणापानादिभेदेनात्मानं विभज्यैतद्बाणं शरीरम् । वाति गच्छतीति बानं बानमेव बाणमस्थिरं शरीरमिति यावत् । तदवष्टभ्य विधारयामीति श्रवणाद्देहधारणं प्राणलिङ्गमेव । अर्थतोऽनुक्रान्तश्रुतिस्तु "मा मोहमापद्यथाहमेवैतत्पञ्चधाऽऽत्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामी"ति । प्राणवायोः प्रज्ञात्मत्वं कथमिति चेत्, ज्ञानेन्द्रियाश्रयत्वादिति ब्रूमः । तस्मादुपक्रमादिपर्यालोचनया ब्रह्मरूपैकवाक्यार्थप्रतीतावपि तस्याजीवमुख्यप्राणरूपपदार्थप्रतीतिजन्यत्वेन गुणत्वात् पदार्थप्रतीतेश्च तज्जनकतया प्रधानत्वादेकवाक्यार्थप्रतीतिमपोह्य वाक्यभेद एव न्याय्य इति जीवमुख्यप्राणब्रह्मणां त्रयाणामुपास्यानां प्रत्येकं स्वातन्त्र्येण वाक्यार्थत्वमिति त्रीणि वाक्यानि नैकं ब्रह्मवाक्यमिति चेन्न । उपासात्रैविध्यात्त्रीण्युपासनानि प्रसज्येरन्नित्यर्थः । उपक्रमोपसंहाराभ्यां ब्रह्मपरत्वेनैकवाक्यत्वं सम्भवति । वाक्यभेदो न युक्तः । न च पदार्थप्रतीतेर्मुख्यत्वं, तस्या वाक्यार्थप्रतीतिशेषत्वेन तस्या एव प्रधानत्वात् । न हि जनकत्वमात्रेणैव प्राधान्यं युक्तं, सन्निपत्योपकारकाणामपि प्रधानताऽऽपत्तेः । "अत एव प्राण" इत्यत्रान्यत्र ब्रह्मलिङ्गवशात्प्राणशब्दस्य ब्रह्मणि प्रवृत्तेराश्रितत्वाच्च, इहापि हिततमोप-

न्यासादिब्रह्मलिङ्गयोगाद्ब्रह्मण एवायमुपदेश इति। यत्तु जीवादिलिङ्गमस्तीति तत्परत्वमिति तन्न, प्राणव्यापारस्यापि परमेश्वरायत्तत्वेन देहधारणस्यापि ब्रह्मण्युपचरितुं शक्यत्वेनानन्यथासिद्धप्राणधर्मलिङ्गाभावात्। तथा च श्रुतिः "न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" इति प्राणादिव्यापारस्येश्वरायत्तत्वमाह। नापि "न वाचं विजिज्ञासीते"त्यादिजीवलिङ्गविरोधः। जीवस्य ब्रह्मानन्यत्वेन सर्वोपाधिपरित्यागेन जीवस्य स्वरूपं ब्रह्म दर्शयितुं "न वाचं विजिज्ञासीते"त्यादि प्रत्यगात्माभिमुखीकरणार्थं उपदेशो न विरुध्यते। "यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धी"ति श्रुत्यन्तरं वागादिव्यापृतस्य वक्तुर्ब्रह्मत्वं दर्शयति। तस्माद्ब्रह्मपरमेवेदं वाक्यं न प्राणादित्रितयपरम्। एकदेशिनस्तु "नोपासात्रैविध्यादाश्रितत्वादिह तद्योगा"दित्यस्यार्थान्तरमाचक्षते। तथा हि। न ब्रह्मवाक्ये जीवमुख्यप्राणलिङ्गयोर्विरोधः। कुतः। उपासनात्रैविध्यात्। जीवधर्मेण प्राणधर्मेण ब्रह्मधर्मेण च सहितस्य त्रिविधस्योपासनस्यैकस्य विवक्षितत्वादित्यर्थः। अतो न वाक्यभेद इति। तत्र "आयुरमृत"मिति, "उपासो वायुः प्राण" इति, "इदं शरीरं परिगृह्योत्थापयती"ति, "तस्मादेतमेवोक्थमुपासीते"ति प्राणधर्मः। "अथ यथास्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्याम" इत्युपक्रम्य, "वागेवास्या एकमङ्गमदूदुहत्तस्यै नाम परस्तात्प्रतिविहिता भूतमात्राप्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोती"त्यादिजीवधर्मः। "ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं यद्धि भूत-

मात्रा न स्युर्न प्रज्ञामात्रास्स्युर्यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्रास्स्युर्न ह्यन्यतरतो रूपं किञ्चन सिध्येन्नो एतन्नाना तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पितास्स एष प्राण एव प्रज्ञात्मे"त्यादि ब्रह्मधर्मः । एतदर्थस्तु । "प्राणो हि भूतानामायु"रिति श्रुत्यन्तरेण प्राणस्यायुष्ट्वं सिद्धं जीवनस्य तदधीनत्वात् । तस्मात्प्राणस्यैव देहाद्युत्थापकत्वाद्देहादिकमुत्थापयतीत्युक्थं प्राणः । एवमायुष्ट्वामृतत्वोक्थत्वं प्राणधर्म इत्यर्थः । "सहवासः सहोत्क्रान्तिश्चे"त्युक्तयानन्तर्य"मथ"शब्दार्थः । अस्या जीवाख्यप्रज्ञायास्सम्बन्धीनि भूत्वा सर्वाणि भूतानि तद्दृश्यत्वेन कल्पितानि वस्तुतो यथैकं भवन्ति तथा तद्वस्तु व्याख्यास्याम"इत्युपक्रम्योक्तं "वागेवे"ति । बुद्धेस्साभासायाः स्वरूपतोऽसाध्यत्वेऽपि विषयस्वरूपपूर्णशरीरमिन्द्रियसाध्यम् । तत्र नामप्रपञ्चविषयित्वमर्धशरीरं बुद्धेरहङ्कारलक्षणायाः । तथा रूपप्रपञ्चविषयित्वमर्धशरीरम् । तथा च कर्मेन्द्रियेषु मध्ये वागेवास्याः प्रज्ञाया देहार्धमेकमङ्गमदूदुहदुद्रेचितवती पूरयामासेत्यर्थः । नामात्मकप्रपञ्चे वाग्द्वारा प्रविष्टा बुद्धिर्नामप्रपञ्चविषयित्वलक्षणमर्धशरीरमाप्नोतीति यावत् । तस्याः प्रज्ञायाः पुन"र्नाम"किल "परस्ता"दपरभागे रूपप्रपञ्चविषयित्वलक्षणेऽर्धशरीरे चक्षुरादिना प्रतिविहिता समुपस्थापिता भूतमात्रा शब्दरूपाद्यर्थरूपा कारणं भवतीत्यर्थः । चक्षुरादिना प्रकाशितोऽर्थप्रपञ्चो बुद्धेरितरभागं रूपप्रपञ्चविषयित्वलक्षणं पूरयामासेति यावत् । एवं वागिन्द्रियेणार्थप्रपञ्चेन च जीवाख्यप्रज्ञापूर्णविषयित्वलक्षणं शरीरं प्राप्य दृष्टा भवतीति

सिद्धम्। तदुपहितचैतन्यद्वारा स्वरूपे दृष्टृत्वाद्यध्यासमाह "प्रज्ञये"ति। तया द्वारा वाचं करणं प्रतिचिदात्माऽहं वक्तेत्यध्यासमनुभूय वाचा करणेन सर्वाणि नामानि वक्तृत्वेनाऽऽप्नोति, चक्षुषा सर्वाणि रूपाणि पश्यतीत्येवं द्रष्टृत्वमनुभवतीत्यर्थः। सर्वभूतविषयिकत्वमात्मनि द्रष्टृत्वादिसम्पादकत्वं च बुद्धेर्धर्म इति फलम्। "चक्षुरेवास्या" इत्यादिपर्यायान्तरार्थोऽपि संगृहीतः। सर्वाधारत्वानन्दत्वादिर्ब्रह्मधर्म इत्याह "ता वा" इति। भूतानि पृथिव्यादीनि पञ्च, मात्राश्च शब्दादयः पञ्च, एता दश भूतमात्राः, "अधिप्रज्ञं" प्रज्ञा इन्द्रियाणि तदुत्थज्ञानानि चाऽधिकृत्य प्रवर्तन्ते। दश प्रज्ञामात्राः पञ्चेन्द्रियाणि तदुत्थबुद्धयश्चा"धिभूतं" भूतानि पृथिव्यादीनि शब्दादीनि चाधिकृत्य प्रवर्तन्ते। एवं भूतमात्राणां दशानां ग्राह्यत्वेन प्रज्ञामात्रात्मकग्राहकापेक्षत्वमुक्तम्। प्रज्ञामात्राणां दशानां ग्राहकाणां ग्राह्यभूतमात्रापेक्षत्वं चोक्तम्। इदमेव मिथःसापेक्षत्वं ग्राह्यग्राहकयोः साधयति "यद्धी"ति। तदेव स्पष्टयति "न ह्यो"ति। ग्राह्याद्ग्राह्यं न सिध्यति, किन्तु ग्राहकादेव। एवं ग्राह्यं विना ग्राहकं न निर्वहतीत्यन्योन्यसापेक्षत्वमित्यर्थः। इदं ग्राह्यग्राहकद्वयं वस्तुतो न भिन्नमित्याह "नो" इति। किं त्वेकस्मिन्नात्मन्यारोपितमिति शेषः। "तद्यथे"त्यादि स्फुटव्याख्यानम्। तस्माद्ब्रह्मण एव धर्मत्रयेणोपासनमेकं विवक्षितम्। अन्यत्राऽपि "मनोमयः प्राणशरीर" इत्यादावुपाधिधर्मैर्ब्रह्मण उपासनस्याऽऽश्रितत्वादिहाऽपि तदुच्यते। तस्माद्ब्रह्मवाक्यमिति। इदमेकदेशिमतमयुक्तम्। तथा हि। किमत्रोपासात्रयविशिष्टं ब्रह्म विधेयं, उत ब्रह्मविशिष्टोपासात्रयं, किं

वा ब्रह्मानुवादेन तदाश्रितोपासाश्रयम् । नाद्यो ब्रह्मणः सिद्धत्वेन विध्ययोगात् । नाऽपि द्वितीयो वाक्यान्तरेण ब्रह्मणो ज्ञातत्वात् । नाऽपि तृतीयो ब्रह्मानुवादेनोपास्तिविधावेकशेषाऽस्वीकारादुपास्तीनां मिथोऽसम्बन्धात्प्रत्युपास्तिविध्या,वृत्त्या वाक्यभेदस्य दुरपह्नवत्वात् । तस्माद्यथाव्याख्यातमेव रमणीयम् ॥

एकादशन्याया अस्मिन्पादे सूत्राण्येकत्रिंशत् ॥

इति प्रथमाध्यायस्य प्रथमः पादः ॥

---

एवं प्रथमे पादे स्पष्टब्रह्मलिङ्गानि वाक्यानि सर्वज्ञसर्वशक्तिजगदुत्पत्तिस्थितिलयकारणब्रह्मपरतया नीतानि । कानि चिद्वाक्यान्यस्पष्टब्रह्मलिङ्गानि सन्दिह्यमानानि द्वितीयतृतीयपादाभ्यां ब्रह्मपरतया नीयन्ते । तत्र द्वितीयपादे प्रायश उपास्यब्रह्मपराणि विचार्यन्ते, तृतीये ज्ञेयपराणीति विभागः ॥

## सर्वत्र प्रसिद्धोपदेशात् । १ । २ । १ ॥

पूर्वस्मिन्पादे सर्वज्ञत्वादिगुणस्य ब्रह्मणः सिद्धत्वानुपपत्तिर्जीवयोरुत्तरस्योत्थानाद्धेतुहेतुमद्भावः सङ्गतिः पूर्वोत्तरयोः । पूर्वाधिकरणेनास्याधिकरणस्यावान्तरसङ्गतिस्तु । यथा पूर्वं जीवादिलिङ्गबाधया ब्रह्मपरत्वमुक्तं ब्रह्मलिङ्गवशात्, न तथेह ब्रह्मलिङ्गमस्ति, किं तु ब्रह्मणः प्रकरणत्वमेव । तथा च प्रकरणापेक्षया लिङ्गस्य बलवत्त्वाज्जीवस्य मनोमयत्वादिलिङ्गमस्तीति तत्परमेवास्त्विति प्रत्युदाहरणसङ्गतिः । यद्वा पादान्तरत्वाद्वावान्तरसङ्गत्यपेक्षेति । सर्वत्राधिकरणे सविशेषवाक्यविचाररूपे पूर्वोत्तरपक्षयोरुपास्तिरेव फलम् । ग्रन्थे तु निर्विशेषवाक्यविचारस्तत्र

पूर्वपक्षे तदुपास्तिः सिद्धान्ते प्रमितिरिति भेदः । छान्दोग्ये श्रूयते "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीर"इत्यादि । अस्यार्थः । सर्वं जगद्ब्रह्मैवेत्यत्र हेतुमाह "तज्जे"ति । तस्माज्जायत इति तज्जम् । तस्मिंश्च लीयत इति तल्लम् । तस्मिन्ननिति चेष्टत इति तदनम् । तज्जं च तल्लं च तदनं च तज्जलान् । अवयवलोपश्छान्दसः । 'इति' शब्दो हेतौ । यस्मादेवं तस्मात्सर्वं जगद्ब्रह्मैवेत्यर्थः । "स क्रतुं कुर्वीते"त्यत्र विहितमुपासनमनूद्य शान्तिरूपं गुणं विदधाति "शान्त"इति । यतो ब्रह्मातिरिक्तं किञ्चिन्नास्ति, अतो द्वेष्यादीनामभावाच्छान्तः सन्नुपासीतेत्यर्थः । गुणं विधाय गुणिविधित्सया पुम्प्रयत्नसाध्योपासनायाः फलमाह "अथे"ति । "पुरुषो"ऽधिकृत उपासकः "क्रतुमयः" संकल्पमयः । तत्र हेतु"र्यथे"ति । शानं कर्म वा यथाऽस्मिन्देहे स्थितः सङ्कल्पयति तथा तदनुसारेण फलं परत्र लभते । तेन सोऽधिकृतः "क्रतु"ध्यानं कुर्वीत । किं ध्यायेदित्याकांक्षायामाह "मनोमय"इति । विभक्तिव्यत्ययेन मनोमयं प्राणशरीरं परमात्मानं ध्यायेदित्यर्थः । अत्र मनोमयत्वादेः प्रकृतब्रह्मसापेक्षत्वनिरपेक्षत्वाभ्यां संशयः, किमत्र मनोमयत्वादिगुणकः शारीर उपास्यत्वेन गृह्यते, किं वा परमात्मेति । किमत्र युक्तं, शारीर इति । कुतः । "अप्राणो ह्यमनाः शुभ्र"इत्यादिना ब्रह्मणो मनआदिसम्बन्धनिरासाज्जीवस्य मनआदिसम्बन्धस्य सर्वत्र सिद्धत्वात् । तस्मान्मनोमयत्वादेः प्रकृतब्रह्मनिरपेक्षत्वात्तद्गुणकशारीर एवोपास्य इति प्राप्ते ब्रूमः, "सर्वत्र प्रसि-

द्धोपदेशात्" । अत्र परमेव ब्रह्मोपास्यत्वेन परिगृह्यते । कुतः । सर्वत्र प्रसिद्धोपदेशात्सर्वेषु वेदान्तेषु यत्प्रसिद्धं ब्रह्म जगत्कारणं तस्यैवात्र "सर्वं खल्विदं ब्रह्मे"त्यादिनोपदेशादित्यर्थः । यदुक्तं मनोमयत्वादि प्रकृतब्रह्मसम्बन्धीति तत्र । मनोमयत्वादेर्विशेष्याकांक्षायां च "सर्वं खल्विदं ब्रह्मे"ति प्रकृतं तदेवान्वेति, नाप्रकृतो जीवः, अन्यथा प्रकृतहानिप्रसङ्गात् । न च तदसम्भवः सर्वात्मकत्वेन सर्वस्याप्युपपत्तेरिति ॥

किञ्च ।

**विवक्षितगुणोपपत्तेश्च ॥ १ । २ । २ ॥**

विवक्षिता उपासनायामुपादेयत्वेनोपदिष्टा ये गुणाः सत्यसङ्कल्पत्वादयस्तेषां ब्रह्मण्येवोपपत्तेरित्यर्थः । "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाश आत्मा सर्वकर्मा सर्वकाम"इत्यादिनोपदिष्टाः । यद्यपि मनोमयत्वादि जीवस्यासाधारणं तथाऽपि सत्यसङ्कल्पत्वाद्यनुरोधेन सर्वात्मके ब्रह्मणि मनोमयत्वाद्युपपत्तिः । जीवधर्मान्ब्रह्मणि दर्शयति च श्रुतिः "त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुख"इति । जीर्णः स्थविरो भूत्वा दण्डेन वञ्चसि गच्छसि सोऽपि त्वमेवेत्यर्थः । "अप्राण"इत्यादि श्रुतिस्तु निर्गुणब्रह्मविषयेत्यविरोधः ॥

एवं सत्यसङ्कल्पत्वादीनां ब्रह्मण्युपपत्तिमुक्त्वा जीवे तेषामनुपपत्तिमाह ।

**अनुपपत्तेस्तु न शारीरः ॥ १ । २ । ३ ॥**

"तु" शब्दोऽवधारणार्थः । अत्र मनोमयत्वादिगुणकं

ब्रह्मैवोपास्यं, न तु शारीरः । कुतः । "अनुपपत्तेः" सत्यसङ्कल्पत्वादीनां जीव आञ्जस्येनानुपपत्तेरित्यर्थः ॥

शारीरस्य मनोमयत्वादिगुणकत्वाभावे हेत्वन्तरमाह

**कर्मकर्तृव्यपदेशाच्च ॥ १ । २ । ४ ॥**

न शारीर इत्यनुषङ्गः । न शारीरो मनोमयत्वादिगुणक इहोपास्यः । कुतः । कर्मकर्तृव्यपदेशात् । "एतमितः प्रेत्याभिसम्भवितास्मी"ति । एतमिति प्रकृतं मनोमयत्वादिगुणकमुपास्यं कर्मत्वेन व्यपदिशति । "अभिसम्भवितास्मि प्राप्तास्मीति शारीरमुपासकं कर्तृत्वेन व्यपदिशति । न च सत्यां गत्यायेकस्मिन्-शारीरे कर्मकर्तृभाव आञ्जस्येनोपपद्यते । तस्माच्च शारीर उपास्यः ॥

किञ्च

**शब्दविशेषात् ॥ १ । २ । ५ ॥**

मनोमयत्वादिगुणः परमात्मैव न शारीरः । कुतः । "शब्दविशेषा"न्मनोमयत्वादिविशिष्टपरमात्माभिधायकस्य प्रथमान्तशब्दस्य सत्त्वादित्यर्थः । तथा हि समानप्रकरणे "व्रीहिर्वा यवोवाश्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन्पुरुषो हिरण्मय"इत्यादौ पुरुषो हिरण्मय इति प्रथमान्तशब्देन परमात्माभिधानं, अन्तरात्मन्निति सप्तम्यन्तेन शारीराभिधानं दृष्टमिति । इहाऽपि प्रथमान्तत्वेन श्रुतो मनोमयइत्यादिशब्दः परमात्मपर एवेति ॥

ननु कर्मकर्तृव्यपदेशो न सम्भवति जीवब्रह्मणोरभेदादित्याशङ्क्याह

## स्मृतेश्च ॥ १ । २ । ६ ॥

स्मृतिवशाज्जीवपरमात्मनोर्भेद इत्यर्थः ।

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥"

इत्याद्या स्मृतिः कल्पितं भेदं दर्शयति । अतः कर्मकर्तृव्यपदेश उपपद्यत इत्यर्थः ।

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ १ । २ । ७ ॥

ननु नात्र परमात्मोपास्यः । कुतः । अर्भकौकस्त्वात् । अर्भकमल्पमोकः स्थानं यस्य सोऽर्भकौकास्तस्य भावस्तत्त्वं तस्मादित्यर्थः । "एष म आत्मान्तर्हृदय" इति हृदयरूपपरिच्छिन्नायतनत्वादित्यर्थः । किञ्च तद्व्यपदेशाच्च स्वशब्देनैवैषः "अणीयान्व्रीहेर्वा यवाद्वे"त्यणीयस्त्वस्य व्यपदेशादाराग्रमात्रो जीव इहोपास्यो न सर्वगतः परमात्मेति चेन्न । "निचाय्यत्वादेव मेवमर्भकौकस्त्वाणीयस्त्वादिविशिष्टत्वेन रूपेण परमात्मन इहनिचाय्यत्वादुपास्यत्वादित्यर्थः । सर्वगतस्य ह्यल्पदेशगतत्वं कयाचिदपेक्षया सङ्गच्छते, यथा सर्वलोकाधीशः परमात्मा श्रीरामचन्द्रोऽयोध्याधीश इति व्यपदिश्यते । एवं शालग्रामे विष्णुबुद्धिवद्धृदयपुण्डरीके परमात्माऽर्भकौकस्त्वादिगुणक उपासनापेक्षया व्यपदिश्यते । नैतावता सर्वगतत्वहानिः । तत्र दृष्टान्तो "व्योमवदि"ति । यथा सर्वगतमपि व्योम सूचीपाशाद्यवच्छेदेनार्भकौकोऽप्यणीयोऽपि व्यपदिश्यते तद्वद्त्रापीत्यर्थः ॥

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ १ । २ । ८ ॥

नन्वीश्वरस्य व्योमवत्सर्वगतत्वे चेतनत्वाविशेषाज्जीववत्सुखदुःखानुभवरूपसम्भोगप्राप्तिरिति चेन्न । "वैशेष्या" जीवपरमात्मनोरत्यन्तं विशेषादित्यर्थः । जीवः कर्ता भोक्तादिधर्मवांश्चेति तस्य सुखदुःखसम्बन्धो युक्तः । परमात्मा तु तद्विलक्षण इति न तस्य सम्भोगप्राप्तिरिति । विशेष एव वैशेष्यम् । स्वार्थे ष्यञ् विशेषातिशयद्योतनार्थो वा । न च जीवपरमात्मनोरभेदाद्भोक्तृत्वादिवैलक्षण्यमपि न स्यादिति वाच्यम्, बिम्बप्रतिबिम्बयोः परस्परधर्मासाङ्कर्यस्याबालसिद्धत्वादिति । तथात्मनोऽमरत्वादिगुणकः परमात्मैवोपास्यो न शारीर इति सिद्धम् ॥

## अत्ता चराचरग्रहणात् ॥ १ । २ । ९ ॥

पूर्वं ब्रह्मणो भोक्तृत्वाभाव उक्तः । तर्हि तद्वदत्तृत्वमपि जीवस्य न ब्रह्मण इति दृष्टान्तसङ्गत्येदमारभ्यते । अत्र पूर्वपक्ष उपास्तिः फलम्, सिद्धान्ते निर्विशेषब्रह्मप्रमितिरिति विवेकः । कठवल्लीषु श्रूयते "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनो मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति । अस्यार्थः । यस्य परमात्मनो ब्रह्म च क्षत्रं चोभे जात्या प्रसिद्धे अशनवदोदनः, यस्य च मृत्युः सर्वमारक उपसेचनमोदनमिश्रघृतं भवति स सर्वस्यात्ता परमात्मा कारणात्मा यत्र वर्तते तं निर्विशेषमात्मानं "नाविरतो दुश्चरिता"दिति मन्त्रोक्तोपायवानन्यथावेद, इत्थमन्य उपायरहितो न वेदेति काकर्थः । अत्रौदनोपसेचनेन सूचितः कश्चिदत्ता प्रतीयते । तत्र किमग्निरत्ता, उत जीवः, आहोस्वित्परमात्मेति संशयः । त्रयाणामप्यस्मिन्प्रश्ने प्रश्नोपन्यासः संशयबीजम् । किं तावत्प्राप्तमग्निरिति । कुतः । "अग्निरन्नाद" इति श्रुतिप्रसिद्धिभ्याम् । जीवोऽप्यत्ता "तयो-

रन्यः पिप्पलं स्वाद्वत्ती''ति श्रुतेः । न परमात्मेति प्राप्ते ब्रूमः । अत्ता चराचरग्रहणात् । अत्तेश्वरो भवितुमर्हति । कुतः । चराचरग्रहणाच्चराचरयोः स्थावरजङ्गमयोरद्यत्वेन ग्रहणाद्भक्षणादित्यर्थः । मृत्यूपसेचनत्वेन सर्वप्राणिमात्रस्याऽद्यत्वेन प्रतीयमानत्वात् । ब्रह्मक्षत्रग्रहणमुपलक्षणार्थम् । न हि सर्वसंहर्तुः परमात्मनोऽन्यस्य जीवादेश्चराचरात्तृत्वं युक्तम् । तस्मादत्तेश्वर एव ॥

## प्रकरणाच्च ॥ १ । २ । १० ॥

इतश्चेश्वर एवात्ता । कुतः । प्रकरणात्परमात्मनः प्रकृतत्वादित्यर्थः । "न जायते म्रियते वा विपश्चि दित्यादिना परमात्मनः प्रकृतत्वात् । "क इत्था वेद यत्र स" इति च दुर्विज्ञेयत्वं ब्रह्मणोऽसाधारणलिङ्गं द्रष्टव्यम् ॥

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥१।२।११॥

पूर्वं ब्रह्मक्षत्रशब्दस्य मृत्युपदसान्निध्यादनित्यवस्तुपरत्ववदिहापि पिबच्छब्दस्य सन्निहितगुहाप्रवेशादिना बुद्धिक्षेत्रज्ञपरत्वमस्त्विति दृष्टान्तसङ्गत्यास्यारम्भः । पूर्वपक्षे बुद्धिभिन्नजीवज्ञानं फलम्, सिद्धान्ते तु निर्गुणब्रह्मज्ञानमिति विभागः । अत्तृत्ववाक्यानन्तरं कठवल्लीषु पठ्यते "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इति । अस्यार्थः । ऋतमावश्यकं कर्मफलं पिबन्तौ भुञ्जानौ जीवपरमात्मानौ । छत्रिणो गच्छन्तीतिवदेकस्य जीवस्य भोक्तृत्वेन ब्रह्मणोऽपि भोक्तृत्वेन व्यपदेशः । सुकृतस्य धर्मस्य कार्ये देहरूपे लोके वर्तमानौ परार्ध्ये परस्य ब्रह्मणोऽर्धं स्थानमर्हतीति. परार्ध्यं हृदयं तस्मिन्परमे श्रेष्ठे

या गुहा नभोलक्षणा तां प्रविश्य स्थितौ छायातपवन्मिथो विरुद्धौ कर्तृत्वादितद्वैलक्षण्याभ्याम् । तौ ब्रह्मविदः पञ्चाग्नयः कर्मिणश्च वदन्ति । त्रिणाचिकेतोऽग्निश्चितो यैस्ते त्रिणाचिकेतास्तेऽपि वदन्तीत्यर्थः । तत्र संशयः किमिह बुद्धिजीवौ निर्दिश्येते उत जीवपरमात्मानाविति । बुद्धिजीवाविति प्राप्तम् । कुतः । जीवस्य बुद्धिभिन्नत्वेन ज्ञानार्थं प्रश्नदर्शनात् । "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीय" इति । मनुष्ये प्रेते मृते सति येयं विचिकित्सा संशयः परलोकगामी भोक्ता जीवोऽस्तीत्येके नास्तीति चान्येऽतस्त्वयोपदिष्टोऽहमेतं निर्विचिकित्सं तत्त्वं ज्ञातुमिच्छामीति मृत्युं प्रति नचिकेतसो वचनमिति । नचिकेता मृत्युं प्रति वरत्रयं वृतवान्स्वपितुः सौमनस्यमग्निविद्याऽऽत्मविद्या चेति । तेषां वराणां मध्य एष तृतीयो वर इत्यर्थः । एवं च बुद्धिजीवयोः पृष्टत्वात्तावेवात्र निर्दिश्येते । किं च गुहाप्रवेशस्य ब्रह्मणोऽसम्भवादृतपानासम्भवाच्च बुद्धिजीवाविति प्राप्ते ब्रूमः । गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् । गुहां प्रविष्टाविह जीवपरमात्मानावेव । कुतः । आत्मानौ हि । हि यस्मादात्मानौ तस्मादित्यर्थः । "ऋतं पिबन्ता"विति कर्मफलभोगश्रवणेनैकस्तावदात्मेति द्वितीयोऽप्यात्मैवेति व्याख्यः । तत्र हेतुमाह "तद्दर्शना"दिति । संख्याश्रवणे हि संख्यावतोरेकरूपत्वस्य लोके दर्शनादित्यर्थः । तथाऽ"स्य गोर्द्वितीयोऽन्वेष्टव्य" इत्युक्ते गौरेव द्वितीयोऽन्वेष्टव्यो नाश्वो न वा मनुष्य एवमिहाऽपि चेतनत्वसाम्याज्जीवपरमात्मानावेव । बुद्धिविलक्षणजीवप्रश्नस्यान्यदेवोत्तरम् । नैतन्नावयेनाऽपि गुहाप्रवेशादु-

पपत्तिर्ब्रह्मणो "यो वेद निहितं गुहाया"मित्यादौ बहुलं गुहाप्रवेशश्रवणात् । न चतपानानुपपत्तिश्छत्रिन्यायस्य दर्शितत्वादिति । तस्माज्जीवपरमात्मानावेव गुहां प्रविष्टौ ॥

किं च

## विशेषणाच्च ॥ १ । २ । १२ ॥

जीवपरमात्मनोरेवास्मिन्ग्रन्थे गन्तृगन्तव्यभावेन मन्तृमन्तव्यभावेन च विशेषितत्वादित्यर्थः । "आत्मानं रथिनं विद्धि शरीरं रथमेव चे"त्यादिनाऽनन्तरेण ग्रन्थेन रथादिकल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति । "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद"मिति परमात्मानं गन्तव्यं कल्पयति । तथा "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणमध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती"ति पूर्वस्मिन्ग्रन्थे मन्तृमन्तव्यत्वेन तावेव विशेषितौ । स जीवोऽध्वनः संसारमार्गस्य । पारमेव विशिनष्टि "त"दिति । व्यापनशीलस्य ब्रह्मणः स्वरूपं परमं कार्यकारणातीतं पदं तदेव पारं ज्ञेयं नान्यदित्यर्थः । दुर्दर्शं सूक्ष्मत्वाद्दुर्ज्ञानमत एव गूढमनुप्रविष्टमाच्छादितरूपेण विद्यमानम् । कुत्रेत्यत आह "गुहे"ति । गुहायां बुद्धावाहितं निहितं गह्वरे बहुविधानर्थसङ्कटे देहे स्थितं पुराणं पुरातनं तमीश्वरमध्यात्मयोगः प्रत्यगात्मन्येव चित्तसमाधानं तत्सहकृताद्वाक्यादधिगमस्साक्षात्कारस्तेन "सोऽहमेवे"ति निश्चित्य धीरो विद्वान्हर्षाद्युपलक्षितं संसारं जहातीत्यर्थः । तथा "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानो जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक"इति मन्त्रान्तरेऽपि जीवपरमात्मानावेव विशिनष्टि मन्तृमन्तव्यभावेन

आत्मेश्वरयोः समानस्तुल्यो वृक्षो देहः । पुरुषो जीवो निमग्नो "मनुष्योऽह"मित्यभिनिवेशवाननीशयाऽविद्यया मुह्यमानस्तत्त्वमजानन्ननिशं शोचति संसारमनुभवति । जुष्टं ध्यानादिना सेवितं यदा तत्प्रकर्षदशायामन्यं बिम्बभूतमीश्वरं प्रत्यक्षत्वेन पश्यति तदा स एवात्मत्वेन दृष्टस्य महिमानं स्वरूपं प्राप्नोति, ततश्च वीतशोको भवति । तत्र हेतु "रिति" शब्देनोक्तः । बन्धहेतोरविद्याया दग्धत्वादित्यर्थः । न ह्यविद्याध्वंसानन्तरं बन्धकल्पनं युक्तं, "न हि स एवंविदि किञ्चन रज आध्वंसते" इति श्रुतेः । रजोऽविद्या विप्रुषि किञ्चनेपदपि स्वकल्पितं नाध्वंसते न संपादयति तस्या एवाभावादित्यर्थः । तस्मात्पूर्वस्मिन्परस्मिंश्च ग्रन्थे जीवपरयोरेव विशेषितत्वात्तावेव गुहां प्रविष्टाविति जीवस्यादिधर्मैर्विनिर्मुक्तः परमात्मा ज्ञेय इति सिद्धम् ॥

अन्तर उपपत्तेः ॥ १ । २ । १३ ॥

पूर्वं "पिबन्तौ"विति प्राथमिकद्वित्वश्रुत्या चेतनत्वेन तुल्यजीवपरदृष्ट्यनुसाराच्चरमश्रुता गुहाप्रवेशादयो नीताः । तर्हि तद्वदेव "दृश्यत" इति प्राथमिकप्रत्यक्षत्वोक्त्याऽक्षिप्रतिबिम्बात्मावगत्यनुरोधाच्चरमश्रुता अमृतत्वादयः स्तुत्यर्थत्वेन कथञ्चिन्नेया इति दृष्टान्तसङ्गत्याऽस्यारम्भः । पूर्वपक्षे प्रतिबिम्बोपास्तिः फलं, सिद्धान्ते ब्रह्मोपास्तिरिति । उपकोसलविद्यायां छान्दोग्ये श्रूयते "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चन्ति वर्त्मनी एव गच्छती"त्यादि । अस्यार्थः । पुरुषः परमात्मा दृश्यते शास्त्रतो न त्विन्द्रियत इति शेषः । "एष

आत्मे''त्युपकोशलं प्रत्याचार्य उवाच। प्रतिबिम्बात्मकच्छायाव्यावृत्त्यर्थमाह ''त''दिति। इत्युवाचेत्यन्वयः। अक्षिरूपस्थानस्य ब्रह्मसारूप्यमाह ''त''दिति। वर्त्मनी पक्ष्मस्थाने इति द्वितीयाद्विवचनम्। ब्रह्मणो निर्लेपत्वाच्चक्षुषोऽपि निर्लेपत्वात्सारूप्यमित्यर्थः। तत्राक्षिण्यन्तर उपदिश्यमानः परमात्मोत प्रतिबिम्बादिरिति संशये, ''दृश्यत'' इति वचनात्सर्वगतस्याक्षिस्थानत्वानुपपत्तेश्च न परमात्मा किन्तु प्रतिबिम्बादिरिति प्राप्ते ब्रूमः। अन्तर उपपत्तेः। अन्तरोऽक्षिमध्यगतः परमात्मैव। कुतः। उपपत्तेरात्मत्वामृतत्वाभयत्वादीनामिहोक्तानां परमात्मन्येवोपपत्तेरित्यर्थः। न च ''दृश्यत''इत्यनेन विरोधो, दर्शनस्य शास्त्रीयत्वेनाविरोधात्। किञ्च, ''एतं संयद्वाम इत्याचक्षत एतं हि सर्वाणि वामान्यभिसंयन्त्येष उ एव वामनी रेष हि सर्वाणि वामानि नयत्येष उ एव भामनीरेष हि सर्वेषु लोकेषु भाती''त्यत्र निर्दिष्टसंयद्वामत्वादिगुणानां परमात्मन्येवोपपत्तेरन्तरः परमात्मैव। तदर्थस्तु। संयद्वामशब्दार्थमाह, ''एतं ही''ति। वामानि कर्मफलान्येतमात्मपुरुषं हेतुमाश्रित्याभिसंयन्त्युत्पद्यन्ते। संयन्ति वामान्यस्मादिति वा संयद्वामः सर्वफलोदयहेतुरित्यर्थः। वामनीरप्ययमेवेत्याह, ''एष''इति। वामनीशब्दार्थमाह, ''एष ही''ति। वामानि शोभनानि जनं प्रापयति, जनस्य सर्वशुभप्रापकोऽप्ययमेवेत्यर्थः। भामनीरप्ययमेवेत्याह, ''एष''इति। भामनीपदार्थमाह, 'एष ही''ति। भामानि भानानि नयतीति भामनीः। अयमेव सर्वप्रकाशक इत्यर्थः। न हि प्रतिबिम्बस्यान्यस्य वैतादृशा गुणाः सम्भवन्ति। तस्मादक्ष्यन्तरः पुरुषः परमात्मा॥

कथं पुनः सर्वगतस्याल्पमक्षिस्थानं व्यपदिश्यत इत्यत्रोत्तरं पठति ।

**स्थानादिव्यपदेशाच्च ॥ १ । २ । १४ ॥**

ईश्वरस्याल्पस्थानादिव्यपदेशो नानुपपन्नः । कुतः । स्थानादिव्यपदेशात्, "यश्चक्षुषि तिष्ठ"न्नित्यादावीश्वरस्य चक्षुःस्थानव्यपदेशस्य दृष्टत्वादित्यर्थः । "आदि"पदेन रूपवत्त्वपरिग्रहो दृष्टान्तत्वेनोक्तः । "हिरण्यश्मश्रु"रित्यादौ रूपवत्त्वस्योपासनार्थत्वेनापादनादिहाप्युपासनार्थमल्पस्थानव्यपदेशो न विरुध्यत इति भावः ॥

अपि च

**सुखविशिष्टाभिधानादेव च ॥ १ । २ । १५ ॥**

अक्षिपुरुषः परमात्मैव । कुतः । सुखविशिष्टाभिधानात् । एवकारेण नात्र संशयः कार्य इति सूच्यते । सुखविशिष्टं ब्रह्म वाक्योपक्रमे श्रूयते, तस्यैवेहाभिधानादित्यर्थः । तथाहि गुरुगृह आचार्याज्ञया चिरकालं वर्तमानमुपकोशलं गार्हपत्याद्यग्नय ऊचुः "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे"ति तत्र कं शब्दो वैषयिकसुखे रूढः, खं शब्द आकाशे रूढः । इति परस्परभेदे प्राप्ते श्रुतिराह "यद्वाव कं तदेव खं यदेव खं तदेव क"मिति । एवं परस्परवैशिष्ट्यप्रतिपादनात्सुखविशिष्टं ब्रह्म वाक्योपक्रमे श्रुतमिति । तस्यैवात्र ग्रहणं युक्तं नाप्रकृतस्याकाशादेरित्यक्ष्यन्तरः परमात्मा ॥

किञ्च

**श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १ । २ । १६ ॥**

इतश्चान्तरः परमात्मा । कुतः । श्रुतोपनिषत्कस्य गत्यभिधानात् । श्रुताऽभ्यस्तोपनिषद्ब्रह्मविद्या येन स श्रुतोपनिषत्कः । तस्य या गतिरर्चिरादिरूपा तस्याः प्रकृतेऽभिधानादित्यर्थः । "अथोत्तरेण तपसा ब्रह्मचर्येण विद्यया श्रद्धयाऽऽत्मानमन्विष्यादित्यमभिजयन्त एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्त" इति, स्मृतावपि ।

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥"

इति या गतिर्ब्रह्मविदो दर्शिता, सैवाक्षिपुरुषविदः श्रूयते "अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदु च नार्चिषमेवाभिसम्भवन्ती"त्युपक्रम्य "आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानव एतान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त" इति । तदर्थस्तु । अथ देहपातानन्तरं ब्रह्मचर्यादितपसा हेतुनाऽऽत्मानमनुसन्धायतद्विद्यया ध्यानाख्ययोत्तरमार्गमर्चिराद्युपलक्षितं प्राप्य तेनादित्यादिद्वारा कार्यं ब्रह्म प्राप्नुवन्तीत्यर्थः । कार्यं ब्रह्मविशिनष्ट्येतदिति । व्यष्टिसमस्तेन्द्रियाणां समष्ट्यभिमानिहिरण्यगर्भस्थानमित्यर्थः । तस्य वास्तवं स्वरूपमाहैतदिति । तद्विशेषणसिद्ध्यर्थं हेतुमाहैतस्मादिति । स्मृतावग्न्यादिशब्दैरतिवाहिकास्तदभिमानिन्यो देवता गृह्यन्ते । अथेत्युक्तार्थम् । अस्मिन्नुपासके मृते यदि पुत्रादयः शव्यं शवसम्बन्धि संस्कारादिकर्म कुर्वन्ति यदि वा न कुर्वन्त्युभयथाऽप्यप्रतिबन्धोपास्तिफलास्त उपासका अर्चिराद्यभिमानिनीं देवतां प्राप्नुवन्त्यर्चिषोऽहर्देवतां ततः शुक्लपक्षदेवतां ततः षण्मासोपलक्षितोत्तरायणदेवतां ततः संवत्सरदेवतां ततश्चादित्यं ततश्चन्द्रमसं ततो

विद्युतमाप्नुवन्ति ततस्तत्र स्थितानुपासकान्ब्रह्मलोकादागत्यामानवो मनुसृष्टावनुत्पन्नो ब्रह्मलोकभव इति यावत्। स पुरुषो गन्तव्यं कार्यं ब्रह्म गमयति प्रापयतीति। अर्चिरादिदेवैर्नेतृभिरुपलक्षितत्वाद्देवपथः। गन्तव्येन ब्रह्मणोपलक्षितत्वाद्ब्रह्मपथः। एतेन यथाकार्यं ब्रह्म प्रतिपद्यमानाः पुनरिमं मानवं मनोः सर्गं जन्ममरणाद्यावृत्तियुक्तत्वादावर्तरूपं नावर्तन्ते न प्रविशन्ति। तस्मादक्षिपुरुषः परमात्मा॥

इतश्चाक्षिपुरुषः परमात्मा न प्रतिबिम्बात्मेत्याह।

## अनवस्थितेरसम्भवाच्च नेतरः॥ १।२।१७॥

इतरश्छायापुरुषादिरक्षिगत इति न युक्तम्। कुतः। अनवस्थितेरुपासकस्य सर्वत्राक्षिणि छायासम्पादकबिम्बभूतपुरुषान्तरस्यानवस्थानादित्यर्थः। असम्भवाच्चामृतत्वादिगुणानां छायापुरुषेऽसम्भवादित्यर्थः। तस्मात्परमात्मैवाक्षिस्थान उपास्य इति सिद्धम्॥

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्॥ १।२।१८॥

पूर्वं "स्थानादिव्यपदेशाच्चे"ति सूत्रे "यः पृथिव्यां तिष्ठ"न्नित्याद्यन्तर्यामिब्राह्मणस्थं "यश्चक्षुषि तिष्ठ"न्नित्यादिवाक्यमन्तर्यामिणो ब्रह्मत्वं सिद्धवत्कृत्योदाहृतम्। तदाक्षिप्य समाधीयत इत्याक्षेपसङ्गत्येदमारभ्यते। पूर्वपक्षे यत्परतया वाक्यं नीयते तदुपास्तिः फलं सर्वत्र सविशेषविचारे द्रष्टव्यम्, सिद्धान्ते ब्रह्मोपास्तिरेवेति। इहापि तथा फलं द्रष्टव्यम्। अन्तर्यामिब्राह्मणे श्रूयते "य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरे

यमयती"त्युपक्रम्य "यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत" इत्यादि । अत्र पृथिव्यां तिष्ठन्नन्तर्यामीत्युक्ते स्थावरादिरिति शङ्कां वारयति "पृथिव्या"मिति । तदभिमानिदेवतां प्रत्याह "य"मिति । अशरीरस्य कथं नियन्तृत्वमित्याह "यस्ये"ति । नियम्यकार्यकारणसंघातेनैव नियन्तृत्वमिति फलितमाह "य" इति । तस्य भिन्नत्वभ्रमं वारय"त्येष" इति । ते मम चेत्यर्थः । एवं यः पृथिव्यां तिष्ठन्नित्याद्यधिदैवतानन्तरं यस्सर्वेषु लोकेष्वित्यधिलोकं, यस्सर्वेषु वेदेष्वित्यधिवेदं, यस्सर्वेषु यज्ञेष्वित्यधियज्ञं, यस्सर्वेषु भूतेष्वित्यधिभूतं, यः प्राणेष्वित्यादि य आत्मनीत्यन्तमध्यात्मं च कश्चिदन्तरोऽवस्थितो यमयिताऽन्तर्यामी श्रूयते, स किमधिदैवाद्यभिमानिनी देवताऽऽत्मा, किं वा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी, किं वा परमात्मेति संशयः । किं तावत्प्राप्तं देवताऽऽत्मेति । कुतः । "पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योति"रित्यादिना कार्यकारणसंघातस्य देवतायां श्रुतत्वेन तस्या नियन्तृत्वोपपत्तेः । यस्य देवस्य पृथिव्यायतनं शरीरम् । अग्निर्लोको लोक्यतेऽनेन रूपादिरिति लोकश्चक्षुः ज्योतिरेव मन इत्यर्थः । न ह्यशरीरस्येश्वरस्य नियन्तृत्वं युक्तं, तस्माद्देवताऽऽत्मा योगी चेति प्राप्ते ब्रूमः "अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्" । अधिदैवादिषु श्रूयमाणोऽन्तर्यामी परमात्मैव । कुतः । तद्धर्मव्यपदेशात् । तस्य परमात्मनो धर्माणामिह व्यपदेशादित्यर्थः । सर्वान्तर्यामित्वमात्मत्वममृतत्वमदृष्टत्वं चेह परमात्मनोऽसाधारणधर्मा उदाहृतवाक्ये द्रष्टव्याः । न चाशरीरस्य

नमेवाऽदृश्यत्वादिगुणको भूतयोनिः स्यादिति प्रत्युदाहरणसङ्गत्याऽस्यारम्भः। आथर्वणवाक्यमाम्नायते "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीरा" इत्यादि। अस्यार्थः। पूर्वमपरर्ग्वेदादि लक्षणाऽविद्योक्ता। तदानन्तर्यमथशब्दार्थः। यया तदक्षरमधिगम्यते सा परोत्कृष्टफलका विद्येत्यर्थः। अक्षरस्य वर्णसमुदायत्वं वारयति "य" दिति। अदृश्यं ज्ञानेन्द्रियागम्यम्। अग्राह्यं कर्मेन्द्रियाविषयः। अगोत्रं वंशशून्यम्। अवर्णं जातिहीनम्। न केवलमिन्द्रियाविषयः किं तु तद्रहितं चेत्याह, "अचक्षु" रिति। न विद्येते चक्षुःश्रोत्रे यस्य तत्तथा। इदं च ज्ञानेन्द्रियोपलक्षणम्। कर्मेन्द्रियाभावमाह "त" दिति। पाणिश्च पादश्च पाणिपादं तद्यस्य नास्ति तत्तथा। उपलक्षणमेतत्कर्मेन्द्रियाणाम्। नित्यमनाशोपलक्षितम्। विभुं प्रभुम्। सर्वगतं सर्वकल्पनाधिष्ठानम्। सुसूक्ष्मं दुर्ज्ञानत्वात्। तदव्ययं नाशाभावात्। यदाथोक्तमक्षरं भूतयोनिं यया परिपश्यन्ति धीराः सा परा विद्येत्यन्वयः। तत्र संशयः किमदृश्यत्वादिगुणको भूतयोनिः प्रधानं वा शारीरो वा परमात्मा वेति। अदृश्यत्वादीनां प्रधाने सम्भवात्प्रधानमिति प्राप्ते ब्रूमः। अदृश्यत्वादिगुणको धर्मोक्तेः। अदृश्यत्वादिगुणको भूतयोनिः परमात्मैव। कुतः। धर्मोक्तेः। "यस्सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपस्तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत" इतीश्वरधर्मस्य सर्वज्ञत्वादेर्भूतयोनौ निर्देशादित्यर्थः। सामान्यतः सर्वज्ञत्वं विशेषतः सर्ववित्त्वं यस्य ज्ञानमेव तपस्तस्मादीश्वरादेतत्कार्यरूपं ब्रह्म हिरण्यगर्भः सूक्ष्मभूतात्मकं नाम स्थूलभूतात्मकं रूपं च व्रीहियवादि सर्वं

भौतिकमन्नं च जायत इत्यर्थः। नन्व "क्षरात्परतः पर" इत्यक्षराद्भूतयोनेः परमेश्वरस्य सर्वज्ञत्वं श्रूयते, न भूतयोनेरिति चेन्न। "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्या" मिति येन ज्ञानेनाक्षरं प्रकृतं भूतयोनिं सर्वज्ञं पुरुषं सत्यं वेद तां ब्रह्मविद्यामुपसन्नाय शान्ताय प्रोवाचाचार्यः प्रब्रूयादित्युपक्रम्य, "अक्षरात्परतः पर" इत्युच्यमानः परो न भूतयोनेरतिरिच्यते किं त्वक्षरादित्यविद्यानिर्देशः। ततः पर इति न विरोधः। किं च। विषयवाक्येऽक्षरात्मकभूतयोनिविद्यायाः परत्वं श्रूयमाणं भूतयोनेर्ब्रह्मत्वं गमयति। न हि ब्रह्मविद्यातोऽन्या विद्या परा भवितुं युक्ता, मोक्षफलकत्वात्तदात्मकत्वस्य ब्रह्मविद्याया एव सम्भवात्। ब्रह्मविद्योपक्रमे श्रूयमाणामपरविद्यामृग्वेदादिलक्षणां कर्मविद्यामनित्यफलकत्वेन निन्दति च नित्यफलकत्वब्रह्मविद्याप्रशंसार्थं। तस्मात्परविद्याविषयभूतमक्षरं भूतयोनिर्ब्रह्मैव। निन्दा हि श्रूयते "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म-एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवाऽपि यन्ती" ति। निन्दित्वा च कर्मविद्यां ततो विरक्तस्य ब्रह्मविद्याऽधिकारं दर्शयति "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ" मिति। अयमर्थः प्लवन्ते गच्छन्तीति प्लवा विनाशिनः। तत्प्रसिद्धौ हिशब्दः। अत एवादृढाः। के ते। यज्ञरूपा यज्ञो रूपमुपाधिर्येषां ते तथा, येगादयोऽष्टादश। ऋतुषु याजयन्तीत्यृत्विजः। षोडश यज्ञोपाधिकास्तत्पत्नी यजमानश्च यज्ञोपाधिकावेवमष्टादश यज्ञरूपाः। क्षयिफलकत्वादवरं जघन्यं कर्म येषु श्रुत्या विहितमेतदेव कर्म श्रेयो हेतुर्न ब्रह्मधीरिति ये मूढा हृष्यन्ति ते

पुनर्जरापूर्वकं मरणमेवाप्नुवन्तीत्यर्थः । कर्मजन्याँल्लोका-न्मर्त्यत्वादिना ऽनित्यतया परीक्ष्य ज्ञात्वा निर्वेदं वैराग्यमा-यादृच्छेत् । कथम् । नास्त्यकृतो मोक्षः कृतेन कर्मणा । अहं तु नित्यफलार्थी, तस्मात्किं कर्मणेति विरक्तः सन् । तस्य ब्रह्मणो ज्ञानार्थं गुरुपादोपसर्पणं कुर्यात् । तत्कृपया मुक्तिसाधनज्ञानाय श्रवणादि कुर्यादित्यर्थः। "रिक्तहस्तस्तु नोपेयाद्राजानं देवतां गुरु" मित्यादिना रिक्तहस्तगमनस्य निषिद्धत्वात्समित्पाणिरित्युक्तम् । "श्रोत्रिय" मित्यादिना ऽध्यापनहीनस्य कर्मिणो वा गुरुत्वं वार्यते । कर्मनिन्दया ततो विरक्तस्याधिकारोक्तेरक्षरविद्या ब्रह्मविद्येति फलि-तम् । तस्माददृश्यत्वादिगुणकः परमात्मा ॥

अपि च—

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ १ । २ । २२ ॥

अदृश्यत्वादिगुणकः परमात्मैव नेतरौ प्रधानजीवौ । कुतः । विशेषणात् । "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्य-न्तरो ह्यजः—अप्राणो ह्यमनाः शुभ्र" इत्यादिना दिव्यत्वा-दिविशेषणश्रवणादित्यर्थः । प्रधाननिरासे हेत्वन्तरमाह "भेद" इति । "अक्षरात्परतः पर" इति प्रपञ्चोपादान-स्याव्याकृतस्येश्वरशक्तिभूतस्य श्रुत्यविरुद्धस्य जडस्य परमात्मनश्च भेदेन व्यपदिष्टत्वादित्यर्थः । अव्याकृतस्या-क्षरत्वं स्वकार्यव्यापित्वेन, परत्वं स्वविकारापेक्षयेति द्रष्ट-व्यम् । दिव्य इत्यादेरयमर्थः । दिव्यः स्वयंज्योतिरमूर्तो निरवयवः पुरुषः पूर्णो बाह्यं कार्यमाभ्यन्तरं कारणं ताभ्यां कल्पिताभ्यां सहाधिष्ठानत्वेन तिष्ठतीति सबाह्याभ्यन्तरः सर्वकल्पनाधिष्ठानमित्यावत् । अजः कूटस्थः । न ह्येता-दृशविशेषणान्यव्यक्ते जीवे वा सम्भवन्ति । तस्मात्पर-मात्मैव भूतयोनिः ॥

## रूपोपन्यासाच्च ॥ १ । २ । २३ ॥

किं च भूतयोनिः परमात्मैव नेतरावित्यनुषङ्गः । कुतः । रूपोपन्यासात् । रूपं सर्वं विकारात्मकं शरीरं तस्योपन्यासादित्यर्थः । "अक्षरात्परत" इत्यस्यानन्तर "मेतस्माज्जायते प्राण" इत्यादिना प्राणादिपृथिव्यन्तानां सृष्टिमुक्त्वा तस्यैव भूतयोनेः सर्वकार्यात्मकं रूपमुपन्यस्यति, "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदा वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मे" ति । अग्निर्द्युलोकः, "असौ वाव लोको गौतमाग्नि" रिति श्रुतेः । विवृता वेदा वागित्यन्वयः । पद्भ्यामिति प्रथमार्थे । पादौ पृथिवी । यस्यैतादृशं शरीरं स एष सर्वभूतानामन्तरश्चात्मा चेत्यर्थः । नह्येतादृशरूपोपन्यासो जीवाव्यक्तयोः परिग्रहे घटते । परमात्मनस्तु सर्वात्मकत्वात्संयुज्यते । अस्य सूत्रस्य वृत्तिकारमतरीत्याऽयमर्थः प्रदर्शितः । शङ्करभगवत्पादास्तु, "अग्निर्मूर्धे" ति वाक्यस्य जायमानमध्यपाताज्जायमानहिरण्यगर्भरूपसूत्रात्मपरत्वं न परमात्मपरत्वमिति वदन्ति । तथा हि । "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" ति पूर्वं प्राणादीनां सृष्टिरुक्ता । तथोत्तरत्राऽपि "तस्मादग्निः समिधो यस्य सूर्य" इति । यस्य द्युलोकादेः सूर्यः समिधोऽग्निरिव भासकः । यद्वाऽग्निर्द्युलोको यस्य सूर्य एव समिध "स्तस्यादित्य एव समि" दिति श्रुतेः । सोऽपि तस्मादेव जायत इत्यर्थः । एवं पूर्वमुत्तरत्र च जायमानानां निर्दिष्टत्वा, "दग्निर्मूर्धे" ति वाक्यं जायमानहिरण्यगर्भपरमेव । जायमानहिरण्यगर्भस्यात्मन उत्पत्तिः श्रुत्यन्तरे श्रूयते "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक

आसीत्स दाधार पृथिवीं द्यामुतेमां तस्मै देवाय हविषा विधेम" इति । समवर्तताजायत । जातः सन्नीश्वराज्ञया पतिर्बभूव भूतग्रामस्य । तस्मै हिरण्यगर्भाय विधेम परिचरेम । सूत्रार्थस्तु । भूतयोनिः परमात्मैव । कुतः । "पुरुष एवेदं विश्वं कर्म" इत्यादिना सर्वात्मकरूपोपन्यासादिति । सर्वकर्मस्तु साध्यं तपोज्ञानं पुरुष एवेत्यर्थः । तस्माददृश्यत्वादिगुणको भूतयोनिः परमात्मा निर्विशेषो ज्ञेय इति सिद्धम् ॥

**वैश्वानरः साधारणशब्दविशेषात् ॥ १ । २ । २४ ॥**

अत्र रूपोपन्यासप्रसङ्गात्त्रैलोक्यदेहो वैश्वानरः स्मृतो विचार्यत इति प्रसङ्गसङ्गतिः । यथा पूर्वं वाक्योपक्रमस्थादृश्यत्वादिसाधारणधर्मस्य वाक्यशेषस्थसर्वज्ञत्वाद्युक्त्या ब्रह्मविषयत्वमुक्तं, तर्हि तद्वदेवेहाप्युपक्रमस्थसाधारणशब्दस्य वाक्यशेषस्थहोमाधारत्वाद्यया प्रसिद्ध्यानुगृहीतया जाठरार्थकत्वमस्त्विति दृष्टान्तसङ्गतिः । "को न आत्मा किं ब्रह्मेत्यात्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इत्युपक्रम्याम्नायते "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय" इत्यादि । अस्यार्थः । आत्मनोऽसंसारित्वार्थं ब्रह्मपदम् । ब्रह्मणोऽपरोक्षत्वार्थमात्मपदम् । प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलाः समेत्येत्थं मीमांसां चक्रुः "को न आत्मा किं ब्रह्मे" ति । ते च निश्चयार्थमुद्दालकमा-

जग्मुः । सोऽपि सम्यङ् न वेदेति तेनोद्दालकेन सह वैश्वानरोऽयमिति निश्चयार्थं कैकयराजानमश्वपतिमागत्योचु "रात्मान" मित्यादि । सम्प्रत्यध्येषि सर्वदाध्यापयसि । स च कैकयराजा द्युलोकसूर्यवाय्वाकाशवारिपृथिवीनां मध्ये द्युलोकादिरेकैक एव वैश्वानर इति मीमांसाकाले विवदमानाः प्राचीनशालादयः षडृषयो मत्समीपमागता इति ज्ञात्वा तादृशविपरीतबुद्धिनिरासेन सम्यग्वैश्वानरबुद्धिजिग्राहयिषया तानेव" पप्रच्छ, "औपमन्यव कं त्वमात्मानमुपास्स" इत्यादिना । पृष्टाश्च सन्तस्तत्रैक ऋषिर्द्युलोक एव वैश्वानर इत्युवाच । अन्यस्तु सूर्यो वैश्वानर इति । एवं क्रमेण पृथिवीपर्यन्तमेकैकस्य वैश्वानरत्वं श्रुत्वा तेषां द्युसूर्यादीनां क्रमेण सुतेजस्त्वविश्वरूपत्वपृथग्वर्त्मात्मत्वबहुलत्वरयित्वपादत्वगुणयोगं विधाय प्रत्येकं वैश्वानरपक्षं मूर्धपातान्धत्वप्राणोत्क्रमणदेहविशीर्णतावस्तिभेदपादशोषणैर्दोषैर्निन्दित्वा तेषामेव द्युसूर्यादीनां वैश्वानररूपं प्रति मूर्धादिभावमुक्त्वा कृत्स्नं वैश्वानरोपासनमुपदिशति "यस्त्वेत" मित्यादिना । आभिमुख्येन विश्वं मिमीते जानातीत्यभिविमानः । तं प्रादेशपरिमाणमुपास्ते यस्तस्य सर्वलोकाद्याश्रयत्वमित्यर्थः । लोका भोगभूमयो भूतानि तदुपाधयो भोक्तारः स्वपरमात्मान इति भेदः । तत्तत्सम्बन्धिफलमन्नशब्दार्थः । ध्यानफलमुक्त्वा ध्येयमाह "तस्ये" ति । सुतेजस्त्वगुणाद्वैश्वानरस्य मूर्धा । विश्वरूपत्वगुणकः सूर्यश्चक्षुः । "एष शुक्ल एष नील" इत्यादि श्रुतेर्विश्वरूपत्वं बोध्यम् । पृथग्नाना वर्त्म गमनमात्मा स्वभावो यस्य वायोः स तथा नानागतित्वगुणो वायुः प्राणः । बहुलत्वगुण आकाशोऽस्य सन्देहो देहमध्यमित्यर्थः । रयिर्धनं तद्गुणा आपोऽस्य वस्तिर्मू-

स्थानम् । वैश्वानरस्य होमाधारत्वसम्पादनार्थं "मुर एवे" त्य दि । एवं सति वैश्वानरशब्दस्य, "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषः" इत्यादौ जाठरे, "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्व" न्नित्यादावग्निसामान्ये, "वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्री" रित्यादावग्निशरीरायां देवतायां च प्रयोगदर्शनादुपक्रमे च "को न आत्मे" त्युपक्रमाच्च संशयः, किमत्र वैश्वानरो जाठर उताग्निसामान्यमुताग्निशरीरा देवताऽऽहोस्विच्छारीरोऽथवा परमात्मेति । अत्यर्थस्तु । पुरुषे पुरुषाकारे देहे । विश्वस्मै भुवनाय वैश्वानरमग्निमह्नां केतुं चिह्नं सूर्यमकृण्वन्कृतवन्तो देवास्तदुदये दिनव्यवहारादित्यर्थः । वैश्वानरस्याग्न्यधिष्ठानस्य देवस्य सुमतौ शोभनबुद्धौ वयं स्याम भवेम तस्यास्मद्विषया सुमतिर्भवत्वित्यर्थः । तत्र हेतु "राजा ही" ति । हि यस्माद्भुवनानामयं राजा कं सुखहेतुरभितुला श्रीरस्येत्यभिश्रीरीश्वरस्तस्मात्तस्य सुमतौ स्यामेति स्तुतिवाक्यार्थः । तत्र जाठरादौ वैश्वानरशब्दस्य प्रसिद्धत्वाज्जाठरादिरेव वैश्वानर इति प्राप्ते ब्रूमः । वैश्वानरस्साधारणशब्दविशेषात् । वैश्वानरः परमात्मैव । कुतः । साधारणशब्दविशेषात् । साधारणशब्दयोरपि विशेषः साधारणशब्दविशेषस्तस्मादित्यर्थः । जाठराग्निसामान्यतद्देवतासु साधारणो वैश्वानरशब्दो, जीवपरयोः साधारण आत्मशब्दः, तयोर्वैश्वानरात्मशब्दयो र्जाठरादौ जीवादौ च साधारणयोरपि सतोः परमात्मपरत्व एव विशेषोऽवगम्यते । "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा" इत्यादावुक्तद्युमूर्धत्वादेः सर्वात्मकपरमात्मपरिग्रह एवोपपन्नतरत्वात् । तस्माद्वैश्वानरः परमात्मा ॥

वेति सन्देहः । पूर्वपक्षे सत्यामपि विद्यायां पापफलभोगानन्तरं विद्यातो मुक्तिः, सिद्धान्ते विद्योत्पत्त्यनन्तरमेव मुक्तिः, इति बोध्यम् । तत्र फलभोगं विना नास्ति विद्यया पापनाश इति प्राप्ते, ब्रूमः । तदधिगमे ब्रह्मसाक्षात्कारे सत्युत्तरपूर्वाघयोरश्लेषविनाशौ भवत एव । कुतः । तयोर्विदुषि श्रुत्या व्यपदेशात् । "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इति श्रुतिर्विद्यावत उत्तरस्य पापस्याश्लेषं दर्शयति । "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति श्रुतिर्विद्यावतः पूर्वस्य पापस्य विनाशं व्यपदिशति । एवं निर्गुणविदोऽपि पापक्षयं व्यपदिशति "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इत्यादिका श्रुतिः । तस्माद्ब्रह्मविद्यावतः पूर्वोत्तरपापासम्बन्ध इति सिद्धम् ॥

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४ । १ । १४ ॥**

पूर्वं ब्रह्मविद्यावतः पापनाशासम्बन्धावुक्तौ । तद्वत्पुण्यस्यापि नाशासम्बन्धौ भवतो न वेति सन्देहे, तत्त्वज्ञानपुण्ययोः शास्त्रीयत्वेनाग्निहोत्रदर्शयोरिव विरोधाभावाच्च भवत इत्यभ्यधिकाशङ्कायां, पूर्वन्यायमतिदिशति । इतरस्यापि पापादितरस्य पुण्यस्याप्येवमघवदश्लेषो विनाशश्च ज्ञानाद्भवतः, "उभे उ हैवैष एते तरति" इत्यादिश्रुतिषु पापासम्बन्धवत्पुण्यासम्बन्धस्यापि व्यपदेशात् । श्रुतावुशब्दोऽप्यर्थः । एष ब्रह्मसाक्षात्कारवान् । सूत्रे तुशब्दोऽवधारणार्थः । एवं ब्रह्मसाक्षात्कारवतः पुरुषधौरेयस्य पुण्यपापयोर्बन्धहेत्वोरभावात्, देहपाते मुक्तिरवश्यं भवत्येवेत्यधिकरणद्वयस्य फलमुक्तम् । अग्निहोत्र-

दर्शयोरविरुद्धफलत्वमुपाधिः । अस्यातिदेशत्वान्न पृथक्सङ्गत्याद्यपेक्षा ॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४ । १ । १५ ॥

पूर्वं ज्ञानात्कर्मक्षय उक्तः । तस्य प्रारब्धकर्मव्यतिरिक्तविषयत्वेनाद्यापवादात्सङ्गतिः । ज्ञानजन्यकर्मक्षयः किमविशेषेण कर्ममात्रस्य भवत्युत प्रारब्धकर्मव्यतिरिक्तस्येति संशयः । पूर्वपक्षे जीवन्मुक्त्यसिद्धिः, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । तत्र "क्षीयन्ते चास्य कर्माणी"त्यविशेषेण श्रवणात्कर्ममात्रस्य क्षय इति प्राप्ते, ब्रूमः । ये पुण्यपापे एतद्देहावच्छेदेन सुखदुःखानुभवार्थं प्रवर्तेते ते आरब्धकार्ये । तद्व्यतिरिक्ते अनारब्धकार्ये पूर्वे अनादिभवपरम्परायां ज्ञानोत्पत्तिपर्यन्तं सञ्चिते । ते एव क्षीयेते । कुतः । तदवधेः, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति देहपातावधिश्रवणादित्यर्थः । तथा च विशेषश्रुत्यनुसारादविशेषश्रुतिर्नेतव्येति भावः । ब्रह्मात्मत्वसाक्षात्कारवान्यावन्न विमोक्ष्ये विमोक्ष्यते तस्य तावदेव चिरं तस्य तावानेव देहपातरूपो विलम्बः । अथ प्रारब्धकर्मभोगाद्देहपातानन्तरं सम्पत्स्ये ब्रह्मसम्पत्स्यत इत्यर्थः ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४ । १ । १६ ॥

पूर्वमनारब्धकार्याणां कर्मणां ज्ञानात्क्षय उक्तः । तस्य नित्यनैमित्तिकातिरिक्तानारब्धकार्यकर्मविषयत्वेनाद्यापवादात्पादसङ्गतिः । किं नित्यनैमित्तिककर्मजातमनारब्धकार्यकर्मवज्ज्ञानात्क्षीयते न वेति सन्देहः । पूर्वपक्षे

काम्यकर्मण इव मुमुक्षूणां नित्यनैमित्तिकयोरप्यननुष्ठानं पङ्कप्रक्षालनन्यायात्, सिद्धान्ते तदनुष्ठानम्, इति बोध्यम् । तत्रानारब्धकर्मत्वाविशेषान्नित्यनैमित्तिककर्मजातं ज्ञानात्क्षीयत इति प्राप्ते, ब्रूमः । अग्निहोत्रादिनित्यनैमित्तिकं कर्म तत्कार्यायैव तस्य ज्ञानस्य यत्कार्यं मुक्तिरूपं तस्मा एव सत्त्वशुद्ध्यादिपरम्परया । कुतः । तद्दर्शनात्, यज्ञादिश्रुतौ ज्ञानहेतुत्वदर्शनादित्यर्थः । तथा च ज्ञानरूपफलैकनारपत्वं नित्यनैमित्तिककर्मजातस्य । नात्र पङ्कप्रक्षालनन्यायः,ज्ञानार्थत्वेनानुष्ठानस्यावश्यकत्वादिति भावः॥

ननु नित्यादेर्ज्ञानार्थत्वे "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्"इति विनियोगवाक्यं किंविषयकमित्यत आह ।

## अतोऽन्याऽपि ह्येकेषामुभयोः ॥ ४ । १ । १७ ॥

अतोऽग्निहोत्रादेर्नित्यादिरूपादन्याऽप्यस्ति काम्यरूपा साधुकृत्या । तद्विषयमिदमेकेषां शाखिनां विनियोगवाक्यम्, तस्या ज्ञानानुपकारकत्वात् । तच्चानुपकारकत्वमुभयोर्जैमिनिबादरायणयोराचार्ययोरनुमतमित्यर्थः । नन्वस्याः काम्यसाधुकृत्याया "इतरस्याप्येवमसंश्लेष" इत्यत्र नाश उक्तः । कथं तस्या विनियोग इति चेत्, अत्र वक्तव्यम् । सुहृदः साधुकृत्यामुपयन्तीत्यस्याः कोऽर्थः । न तावत्तामेव प्राप्नुवन्तीत्यर्थः, द्रव्यादिवत्तस्याः प्राप्त्ययोगात् । नापि तत्फलं प्राप्नुवन्तीत्यर्थः, शास्त्रफलं प्रयोक्तरीति न्यायविरोधात् । न च वैश्वानरेष्टिन्यायः, अश्रवणात् सुहृदोऽनुद्देश्यत्वाच्च । तस्माद्विद्वत्संबन्धकर्तरि सुहृदि विद्वन्निष्ठा साधुकृत्या स्वतुल्यां साधुकृत्यां जनयति,

स्वयं च ज्ञानान्नश्यतीत्यविरोधः । समानः पापकृत्यायामूहः । अर्थवादत्वान्नातीवाभिनिवेष्टव्यम् ॥

## यदेव विद्ययेति हि ॥ ४ । १ । १८ ॥

पूर्वं मुमुक्षूणां ज्ञानार्थं नित्यादिकमनुष्ठेयमित्युक्तम् । तत्किमङ्गाश्रितोपासनसहितमेव ज्ञानार्थमनुष्ठेयमिति नियम, उतोपासनसहितं केवलं वाऽनुष्ठेयमित्यनियमः, इति संशयः । एकविषयत्वं सङ्गतिः । पादसङ्गतिस्तु प्रासङ्गिकी बोध्या । पूर्वपक्षे केवलस्य नित्यादेर्ज्ञानहेतुत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । तत्र नियमे प्राप्ते, ब्रूमः, नियमो न युक्त इति । तथाहि "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति" इति श्रुतिर्विद्यासहितस्य कर्मणो वीर्यवत्तरत्वं ब्रुवन्ती विद्याहीनस्य कर्मणो वीर्यवत्त्वं फलहेतुत्वरूपं दर्शयति । तच्च केवलकर्मणो ज्ञानरूपफलहेतुत्वाभावे न युक्तं स्यात् । तस्मात्केवलमपि कर्म ज्ञानहेतुरित्यनियम इति सिद्धम् ॥

एवमनियमेनाग्निहोत्रादिकर्मणो ज्ञानार्थत्वान्न ज्ञानेन क्षय इत्युक्तम् । इदानीं प्रारब्धकर्मणाम् "अनारब्धकार्ये एव तु" इत्यत्र ज्ञानानिवर्त्यत्वेनोक्तानां निवृत्तिप्रकारमाह ।

## भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ ४ । १ । १९ ॥

किं ब्रह्मसाक्षात्कारवान्देहपातानन्तरमपि संसरति न वेति सन्देहः । पूर्वपक्षे साक्षात्कारस्य मुक्तिहेतुत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति विवेकः । तत्र देहपातात्पूर्वं यथा साक्षात्कारेऽपि संसारानुवृत्तिः, एवं देहपातानन्तरमपीत्यनारब्धाधिकरणदृष्टान्तेन प्राप्ते, ब्रूमः । स-

ञ्चितकर्मणां ज्ञानान्नाश उक्तः । इतरे स्वारब्धकार्ये पुण्यपापे भोगेन क्षपयित्वा विद्वान्ब्रह्म सम्पद्यते । "अथ सम्पत्स्ये" "ब्रह्मैव सन्ब्रह्माप्येति" इत्यादिश्रुतिभ्यो देहपातात्पूर्वं प्रारब्धकर्मणां मत्त्वत्कुलालचक्रभ्रमणन्यायेन मिथ्याज्ञानरूपनिमित्तनाशेऽप्यविद्यालेशानुवृत्तिर्युक्ता । तद्भोगानन्तरं कस्यचिदपि कर्मणो जन्ममरणलक्षणसंसारहेतोरभावान्न संसारः । तस्माद्भोगेन प्रारब्धकर्मनाशानन्तरं विद्वान्स्वरूपानन्दात्मनाऽवस्थानलक्षणं स्वास्थ्यं मोक्षाख्यं लभत इति सिद्धम् ॥

इति चतुर्थाध्यायस्य प्रथमः पादः ॥

---

पूर्वपादान्त्याधिकरण उत्क्रान्त्यनपेक्षा निर्गुणप्राप्तिरुक्ता । इदानीं सगुणविद्याफलभूतस्य ब्रह्मलोकस्योत्क्रान्तिं विना प्राप्त्ययोगात्तत्फलं निरूपयिष्यन्नेव तद्धेतुभूतामुत्क्रान्तिं निर्गुणब्रह्मविद्व्यतिरिक्तसर्वजनसमानां निरूपयितुं पादमारभते ।

## वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ४ । २ । १ ॥

अस्त्युत्क्रान्तिक्रमबोधिका श्रुतिः "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" इति । प्रयतो म्रियमाणस्येत्यर्थः । तत्र वाङ्मनसि सम्पद्यत इत्यत्र संशयः, किं वृत्तिमत्या वाच एव मनसि लयात्मकसम्पत्तिरुच्यते, उत वाग्वृत्तेरेवेति । पूर्वपक्षे स्वोपादाने स्वस्य लय इति न्यायासिद्धिः, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । तत्र श्रुतिबलाद्वाच एव मनसि लय इति प्राप्ते, ब्रूमः । उक्तिर्वा-

गिति भावव्युत्पत्त्या वाक्शब्देन वाग्वृत्तिरुच्यते । मनोवृत्तौ सत्यामेव मनसि वाग्वृत्तिः सम्प्रलीयते कुतः । दर्शनात्, मनोवृत्तौ सत्यामेव लोके वाग्वृत्तिलयस्य दर्शनात् । तर्हि "वाङ्मनसी"ति श्रुतेः का गतिरित्यत आह "शब्दाचे"ति । स्वोपादाने स्वस्य लय इत्यबाधितन्यायानुसारेण वाक्शब्दाद्वृत्तिवृत्तिमतोरभेदोपचारेण भावव्युत्पत्त्या वाऽर्थो नेय इत्यर्थः । नन्वनुपादाने वृत्तिलयो वा कथमिति चेत्, न, अग्निवृत्तिलयस्यानुपादानाप्सु दर्शनादिति ॥

उक्तश्रुतौ वाच एव श्रवणादिन्द्रियान्तराणां चक्षुरादीनां मनसि वृत्तिलयो नास्तीति भ्रमं वारयति ।

## अत एव च सर्वाण्यनु ॥ ४ । २ । २ ॥

यत एव मनसो वागुपादानत्वाभावान्मनसि वाचो वृत्तिलयमात्रमत एव सर्वाणि चक्षुरादीन्यपि स्वानुपादाने मनसि सवृत्तिके स्ववृत्तिलयमात्रेणानुवर्तन्ते प्रलीयन्ते, न तु स्वरूपेणेत्यर्थः । "तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः" इति श्रुतिः सर्वेषामिन्द्रियाणां मनसि वृत्तिलयबोधिका द्रष्टव्या । तस्मादुत्क्रमणादूर्ध्वमुपशान्ततेजा उपशान्तदेहौष्ण्यः पुनर्जन्म मनसि स्थितैरिन्द्रियैः प्राप्नोतीत्यर्थः ॥

एवं "वाङ्मनसी"ति वाक्यं विचार्य "मनः प्राण" इत्युत्तरवाक्ये किं सर्वेन्द्रियवृत्तिलयाधारस्य मनसः प्राणे स्वरूपलयो वृत्तिलयो वेति संशये, "अन्नमयं हि सोम्य मन आपोमयः प्राण" इति श्रुतौ प्राणमनसोरप्‌न्नविकारत्वश्रवणादप्‌न्नयोश्चोपादानोपादेयभावात्स्वरूपलय इति प्राप्ते, सिद्धान्तयति ।

## तन्मनः प्राण उत्तरात् ॥ ४ । २ । ३ ॥

"स्वोपादाने" इत्यादिन्यायाभावाद्भवत्विन्द्रियाणां मनसि वृत्तिलयः । इह तु न्यायसत्त्वात्स्वरूपलय इति प्रत्युदाहरणसङ्गतिः, अतिदेशत्वात्सङ्गत्यनपेक्षा वा । 'तत्' सर्वेन्द्रियवृत्तिलयाधिकरणं मनोऽपि प्राणे स्ववृत्तिलयेनैव लीयते न स्वरूपेणेति 'मनः प्राणे' इत्युत्तराद्वाक्यादवगन्तव्यम् । सुषुप्तिमूर्च्छाऽवस्थयोः सवृत्तिके प्राणे सत्येव मनोवृत्तिलयदर्शनादिति हेत्वनुषङ्गः । न ह्यनयोरुपादानोपादेयत्वमात्रेण तद्विकारयोरप्युपादानोपादेयभावो युक्तः, हिमघटयोस्तददर्शनादिति भावः ॥

एवं "मनः प्राणे" इति वाक्यं विचार्य, "प्राणस्तेजसी" त्युत्तरवाक्ये किं प्राणस्य वृत्तिलयस्तेजसि, उत जीवे, इति सन्देहे, श्रुतिबलात्तेजस्येवेति प्राप्ते, सिद्धान्तयति ।

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ । २ । ४ ॥

वाक्यक्रमादर्थक्रमाच्चाधिकरणक्रमो बोध्यः । 'सः' प्राणः 'अध्यक्षे' कार्यकारणसङ्घातस्वामिनि तत्साक्षिणि वा जीवे निवृत्तवृत्तिः सन्नवतिष्ठते । कुतः । तं जीवं प्रत्युपगमनानुगमनावस्थानेभ्यः । यथा राजानं यात्रेच्छावन्तं सन्तं भृत्या आभिमुख्येनागच्छन्ति "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती"ति श्रुतिरिन्द्रियाणां मुख्यप्राणसहितानां जीवं प्रत्याभिमुख्येनागमनं दर्शयति । "तमुत्क्रामन्तं प्राणोऽनूत्क्रामती"ति श्रुतिर्गच्छन्तं जीवं प्रत्यनुगमनं प्राणस्य दर्शयति । "सविज्ञानो भवती"ति श्रुतिः करणव्युत्पत्त्या विज्ञानशब्दवाच्येन्द्रि-

यजातस्य प्राणसहितस्य प्राप्तव्यकर्मफलज्ञानवति जीवेऽवस्थानं दर्शयति । तस्माज्जीव एव प्राणस्य हृत्तिलयः ॥

ननु कथं तर्हि "प्राणस्तेजसी"ति श्रुतिरित्यत आह ।

## भूतेषु तच्छ्रुतेः ॥ ४ । २ । ५ ॥

'तच्छ्रुतेः' प्राणस्तेजसीति श्रुतेः सूक्ष्मात्मना विद्यमानेषु तेजःसहितेषूत्तरदेहारम्भकेषु पञ्चभूतेषूपाधिषूपहितत्वेन विद्यमाने जीवे प्राणस्य वृत्तिलय इत्यवगन्तव्यम्, उपशमादिश्रुत्यन्तरानुसारात् । तथा चोपहितजीवप्राप्तौ प्राणस्योपाधितेज आदिभूतप्राप्तेरर्थसिद्धत्वा"त्प्राणस्तेजसी"ति श्रुत्युपपत्तिरित्यर्थः ॥

ननु "प्राणस्तेजसी"त्येकस्यैव तेजसः श्रवणा त्कथं तेजःसहितेषु भूतेष्वित्युक्तमित्यत आह ।

## नैकस्मिन्दर्शयतो हि ॥ ४ । २ । ६ ॥

एकस्मिन्नेव तेजसि जीव उत्क्रान्तिसमये नावतिष्ठते, उत्तरदेहस्य पाञ्चभौतिकत्वेन पञ्चभूतेषु स्थितेरावश्यकत्वात् । दर्शयतो हीममर्थं रंहस्यधिकरणे व्याख्याते प्रश्ननिरूपणे । यद्वा श्रुतिस्मृती इममर्थं दर्शयतः । "पृथ्वीमय आपोमयो वायुमय आकाशमयस्तेजोमयः" इत्याद्या श्रुतिः । "अण्व्यो मात्राऽविनाशिन्यो दशार्धानां तु याः स्मृताः । ताभिः सार्धमिदं सर्वं सम्भवत्यनुपूर्वशः" इति स्मृतिः । अण्व्यः सूक्ष्माः । मीयन्त इति मात्राः । प्राक्मोक्षादविनाशिन्यः । दशार्धानां पञ्चानां भूतानामित्यर्थः । ननु जीवस्योत्क्रान्तिकाले भूताश्रयत्वं "तौ ह यदूचतुः कर्म हैव तदूचतु"रिति कर्माश्रयत्वबाधकश्रुतिविरुद्धमिति

चेन्न । कर्मणो बन्धनिमित्तत्वेनाश्रयत्वं, भूतानां देहोपादानत्वेनाश्रयत्वं, इत्यविरोधात् । तौ याज्ञवल्क्यार्तभागौ यज्ञोचाधारभूतमूचतुस्तत्कर्मैवेति श्रुतेर्वचनम् ॥

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४ । २ । ७ ॥

पूर्वोक्तामुत्क्रान्तिमुपजीव्य सन्दिह्यते, किमुत्क्रान्तिरविदुष एव, उत विदुषो दहरादिसगुणब्रह्मोपासकस्यापि, इति । तत्र "तयोर्ध्वमायन्नमृतत्वमेती"ति दहरोपासकस्य मोक्षश्रवणादविदुष एवोत्क्रान्तिरिति प्राप्ते ब्रूमः । सृतिः सरणानुकूलो देवयानमार्गः । तदुपक्रमात्पूर्वभाविनी योत्क्रान्तिः सा सगुणब्रह्मविदविदुषोः समानैव, "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते" इत्यादिसामान्यश्रवणात् । ननु कथं तर्हि सगुणविद्यायाममृतत्वश्रवणमिति तत्राह "अमृतत्वं चे"ति । "उपदाहे"इति धातोरिदं रूपं "अनुपोष्य"इति । रागादीन्क्लेशानदग्ध्वैवेदमापेक्षिकममृतत्वं ब्रह्मलोकप्राप्तिलक्षणं, न मुख्यो मोक्षः । अत एव "तयोर्ध्वमाय"न्निति मूर्धन्यनाडीशरीरोत्क्रान्तिपूर्वकत्वममृतत्वस्य दर्शितम् । तस्माद्विदविदुषोः समानैवोत्क्रान्तिरिति सिद्धम् ॥

नन्रुत्क्रान्तिः समानेत्ययुक्तं, मृतस्य स्वरूपत एवात्यन्तं ब्रह्मसम्पत्तेः, इत्याक्षेपे, इदमारभ्यते ।

## तदाऽपीतेः संसारव्यपदेशात् ॥ ४ । २ । ८ ॥

"तेजः परस्यां देवताया"मित्यत्र तेजः सजीवं सेन्द्रियजातं सप्राणं मनस्सहितं भूतान्तरसहितं परमात्मनि

सम्पद्यत इति सूक्ष्मशरीरस्य लयः श्रूयते । स लयः किमात्यन्तिक एवोतानात्यन्तिक इति संशयः । पूर्वपक्षे मृतमात्रस्य मुक्तिः, सिद्धान्ते तदभावः, इति बोध्यम् । तत्र ब्रह्मण उपादानत्वादात्यन्तिक एवैष लय इति प्राप्ते ब्रूमः । 'तत्' उक्तविशेषणं सूक्ष्मं तेजः 'आऽपीतेः' आमोक्षादवतिष्ठते, "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्" इति संसारव्यपदेशात् । विधितत्त्वज्ञानशास्त्रयोर्मृतमात्रस्य मुक्तावानर्थक्यं प्रसज्येत । तस्मात्सुषुप्ताविवानात्यन्तिको लयः ॥

ननूक्तलक्षणं तेजो यद्यस्ति तर्हि देहान्निर्गच्छत्पार्श्वस्थैरुपलभ्येत प्रतिहन्येत कुड्यादिवन्मूर्तान्तरैरित्यत आह ।

सूत्रं प्रमाणतश्च तथोपलब्धेः ॥ ४ । २ । ९ ॥

चकारः स्वरूपसौक्ष्म्यसमुच्चयार्थः । उक्तं तेजः प्रमाणतः स्वरूपतश्च सूक्ष्मम्, त्रसरेणुवच्चक्षुर्वच्च तस्य नाडीद्वारा निष्क्रमणश्रुत्या तथा सूक्ष्मत्वेनोपलब्धेः । अत्र सूक्ष्मत्वेनैव स्वच्छत्वमुपलक्ष्यते । तथा चानुद्भूतरूपवत्त्वेन सूक्ष्मत्वाच्चक्षुर्वन्नोपलभ्यते, स्वच्छत्वान्मूर्तान्तरेण न प्रतिहन्यते, स्वल्पत्वान्नाड्यादौ सञ्चारोपपत्तिरिति ॥

नोपमर्देनातः ॥ ४ । २ । १० ॥

अत एव स्वच्छत्वलक्षणात्सौक्ष्म्यादसक्तत्वरूपादस्य सूक्ष्मशरीरस्य स्थूलदेहस्य दाहच्छेदनादिनिमित्तेनोपमर्देन नोपमर्द इत्यर्थः ॥

सूक्ष्मदेहसद्भावे चौष्ण्यलिङ्गकमनुमानमाह ।

## अस्यैव चोपपत्तेरेष ऊष्मा ॥ ४ । २ । ११ ॥

स्थूलदेह एष उपलभ्यमान ऊष्माऽस्यैव सूक्ष्मदेहस्य धर्मः । सत्येव सूक्ष्मदेहे तदुपलब्धेः, तदभावे मृतदेहे तदनुपलब्धेः, इत्यन्वयव्यतिरेकाभ्यां तद्धर्मत्वस्यैवोपपत्तेरित्यर्थः ॥

"आसृत्युपक्रमा"धिकरणे मुख्यामृतत्व उत्क्रान्त्यभावो दर्शितः । स न युक्त इत्याक्षिपति ।

## प्रतिषेधादिति चेन्न शारीरात् ॥ ४ । २ । १२ ॥

व्यवहिताधिकरणेनास्य सङ्गतिः । किं निर्गुणब्रह्मविद उत्क्रान्तिरस्ति न वेति सन्देहे, अस्तीति प्राप्तम् । ननु "अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति" इति परब्रह्मविदः शरीरात्प्राणोत्क्रान्तिप्रतिषेधान्नास्त्युत्क्रान्तिरिति चेन्न । शारीराज्जीवादयं प्राणोत्क्रान्तिप्रतिषेधः, न शरीरात्, "न तस्मात्प्राणा उत्क्रामन्ती"ति माध्यन्दिनशाखायां जीवादेव प्राणोत्क्रान्तिप्रतिषेधस्य श्रुतत्वात् । तस्मात्प्राणादिसहितस्य, परब्रह्मविदोऽप्युत्क्रान्तिरस्तीति पूर्वपक्षः । श्रुत्यर्थस्तु । मुक्तिप्रक्रमार्थोऽथशब्दः । बाह्यविषयकामनाशून्यत्वमकामत्वम् । मानसिकविषयकामनाशून्यत्वं निष्कामत्वम् । प्राप्तस्वरूपानन्दतृप्तत्वमाप्तकामत्वम् । तत्र हेतुरात्मकाम इति ॥

सिद्धान्तयति ।

## स्पष्टो ह्येकेषाम् ॥ ४ । २ । १३ ॥

एकेषां काण्वानां शाखायां प्राणानां परब्रह्मविद्देहादुत्क्रान्तिप्रतिषेधो 'हि' यत उपलभ्यते, अतो न तस्योत्क्रान्तिरस्तीत्यर्थः। तथाहि "यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो नेति" आर्तभागप्रश्ने द्वितीयमनुत्क्रान्तिपक्षमाश्रित्य याज्ञवल्क्यो नोत्क्रामन्तीत्युक्त्वा, तर्हि प्राणोत्क्रान्त्यभावे मृतो न भवेदित्याशङ्क्य "अत्रैव समवनीयन्ते" इति प्राणविलयं प्रतिज्ञाय, तत्सिद्धये "स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते" इत्युत्क्रान्त्यभावे देहस्योच्छूनतादिकमाह। एतत्सामान्यान्माध्यन्दिनशाखायामपि "तस्मा"दित्यनेन देहस्यैव ग्रहणं बोध्यम्। उत्पन्नात्मसाक्षात्कारस्य 'यत्र' यदा 'अयं' स्थूलः प्रत्यक्षः 'पुरुषो' देहो 'म्रियते' सर्वचेष्टाशून्योऽतिशीतलो भूमौ शेते, तदा 'अस्मात्' देहात्प्राणा उत्क्रामन्ति 'आहो' पक्षान्तरेणात्रैव नाशं यान्तीति प्रश्नार्थः। अत्र प्राणशब्देन सूक्ष्मदेह उक्तः। 'स' देह 'उच्छ्वयति' उच्छूनो भवति। नन्वयं रोगः कश्चिदित्यत आह "आध्मायती"ति। बाह्येन वायुना पूरितो विविधाञ्छब्दानार्द्रभेरीवत्करोति। यत आध्मातः शब्दवानतो 'मृतो' विलीनसूक्ष्मशरीरः सन्भूमौ शेत इत्यर्थः। तस्माज्जीवात्प्राणोत्क्रान्तेरभावत्वेन निषेधयोगाद्विद्वद्देहादेव प्राणोत्क्रान्तिप्रतिषेध इति न विदुषो मार्गोत्क्रान्ती स्तः॥

## स्मर्यते च ॥ ४ । २ । १४ ॥

स्मर्यते च महाभारते मार्गोत्क्रान्त्योरभावः "सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः। देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः" इति। पदशब्दः प्राप्यपदवाची।

स्यातिरिक्तपदशून्यस्य ब्रह्मविदः पदैषिणो देवा अपि मार्गे मुह्यन्ति मार्गं न जानन्ति तदभावादित्यर्थः । तस्माद्विदुषः स्वरूपे ब्रह्मण्येव प्राणानां लयो नोत्क्रान्तिरिति सिद्धम् ॥

ननु ब्रह्मणि प्राणलय इत्ययुक्तम्, पृथिव्यादिषु लयश्रुतेरित्याक्षेपे, इदमाह ।

## तानि परे तथाह्याह ॥ ४ । २ । १५ ॥

किं विदुषः प्राणशब्दाभिधेयसूक्ष्मदेहलयः पृथिव्यादिषूत परब्रह्मणीति सन्देहे "गताः कलाः पञ्चदश प्रतिष्ठाः" इति विद्वद्विषयश्रुत्यैव पृथिव्यादिषु लयावगमात्तेष्वेव लय इति पूर्वपक्षः । यद्यपि मनःसहितानि दशेन्द्रियाणि पञ्चभूतसूक्ष्मसहितानि पञ्चप्राणसहितानि वा षोडशकलाः सन्ति, तथाऽपि प्राणमनसोरेकपृथिवीविकारत्वेनैक्यविवक्षया श्रुतौ पञ्चदशेत्युक्तम् । प्रतिष्ठाशब्देन तत्तत्कलोपादानानि पृथिव्यादीन्युच्यन्ते । तानि कलागतास्तत्र लीना इति यावत् । तत्र सिद्धान्तः । "तान्युक्तविशेषणानीन्द्रियाणि षोडशकलात्मकसूक्ष्मदेहरूपाणि परे ब्रह्मणि लीयन्ते । तथाह्याह श्रुतिः "एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती"ति । यथा नद्यः समुद्रं प्राप्यास्तं गच्छन्ति, एवमेवास्य जीवस्य परितः सर्वतोऽनवच्छिन्नं प्रत्यग्रूपं ब्रह्म द्रष्टुरिमाः स्वानुभवगम्याः । स्वोपादाने स्वस्य लय इति व्य.लिङ्गुलकच्यापकारिकप्रमाणानुमानापेक्षया पूर्वश्रुतौ पृथिव्यादिषु लिङ्गशरीरलय उक्तः, तत्त्वावेदकश्रुत्यपेक्षया ब्रह्मविवर्तस्य सर्वस्य ब्रह्मणि लयो द्वितीयश्रुतावुक्तः

इत्यविरोधः । स्वोपादानेषु प्रलीनाः कलाः स्वोपादानैः सह ब्रह्मणि विनश्यन्तीति श्रुतिद्वयतात्पर्यम् ॥

**अविभागो वचनात् ॥ ४ । २ । १६ ॥**

सोऽयं विद्वत्कलाविलयः किमविदुष इवानात्यन्तिक उतात्यन्तिक इति सन्देहः । एकविषयत्वं सङ्गतिः । पूर्वपक्षे मोक्षासिद्धिः, सिद्धान्ते तत्सिद्धिरिति बोध्यम् । यत्र फलं नोच्यते तत्र पूर्वोत्तरपक्षसिद्धिः फलमिति मन्तव्यम् । तत्रानात्यन्तिकलय इति प्राप्ते ब्रूमः । विदुषः कलानां ब्रह्मणा सहात्यन्तमविभाग एव, न सावशेषो लयः कलानाम् । कुतः । कलानां लयोक्त्यनन्तरं "भिद्येते तासां नामरूपे" इति कलानां शब्दयात्मकनामरूपयोः पुरुषे लयमुक्त्वा "स एषोऽकलोऽमृतो भवती" ति वचनादित्यर्थः ॥

परविद्याचिन्तां प्रासङ्गिकीं समाप्य प्रकृतामपरविद्याचिन्तामनुसरति ।

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ४ । २ । १७ ॥**

आसृत्युपक्रमाधिकरणे सगुणब्रह्मविदुषामविदुषां च समानोत्क्रान्तिरित्युक्तम् । तत्र विद्वदुत्क्रान्तौ विशेषोऽत्रोच्यते । तस्य लीनवृत्तिकवागादिसमूहस्योत्क्रमिष्यतो जीवस्यौक आयतनं हृदयं तस्य यदग्रं नाडीद्वारमुखं तस्य ज्वलनं प्राप्तव्यकर्मफलज्ञानरूपं प्रद्योतारूयमादौ भवति । तेन प्रद्योतेन प्रकाशितद्वारो विद्वानविद्वांश्च भवति । तथाहि श्रुतिः "तस्य हैतस्य हृदयस्याग्रं प्रद्योतते

तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः" इति । तत्र संशयः, किमविद्वद्वत् विदुषोऽप्यनियतेन केनचिद्द्वारेणोत्क्रान्तिरुत मूर्धन्यनाडीद्वारेण नियतेनैवेति । तत्र विद्वत्कलानां वचनादविभागवचक्षुष्टो वेत्यनियमवचनादनियतेनेति प्राप्ते ब्रूमः । दहरादिसगुणब्रह्मोपासकस्य मूर्धस्थानादेव निष्क्रमणं, विद्यासामर्थ्यात् । अन्यथा द्वारनियमाभावे विद्यात उत्कृष्टफलप्राप्तिर्न स्यादित्यर्थः । ननु द्वारानियमेऽप्युत्कृष्टफलप्राप्तिर्भविष्यतीत्यत आह "तच्छेषे"ति । तस्याः सगुणविद्यायाः शेषभूता या गतिर्मूर्धन्यनाडीप्रभृतिमार्गस्तस्या अनुस्मृतिर्ध्यानं तद्विधानाच्च तेनैव ध्यातेन मार्गेण निष्क्रमणं युक्तम् । अन्यथा द्वारानियमेऽपि फलप्राप्तौ मार्गध्यानविधिवैयर्थ्यं स्यात् । तस्माद्धृदिष्ठेन ब्रह्मणा सूपासितेनानुगृहीतस्तद्भावमापन्नो विद्वान्मूर्धन्ययैव शतनाडीभ्योऽधिकया निष्क्रामति । अविद्वांस्त्वितराभिर्नाडीभिः । तथाच श्रुतिर्हार्दब्रह्मविद्यायाम् "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभि निस्सृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ती"ति । विष्वङ् नानागतयः । तस्माद्धृदयाद्धृत्तया भास्वरया मूर्धानं गतया सूर्यरश्मिभिरेकीकृतया ब्रह्मनाड्या विद्वान्निष्क्रामतीति सिद्धम् ॥

## रश्म्यनुसारी ॥ ४ । २ । १८ ॥

हार्ददहरब्रह्मविद्यायामेव ब्रह्मनाडीरश्मिसम्बन्धमुक्त्वा "अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति पूर्वोक्तरीत्या ब्रह्मनाड्या निष्क्रामतो रश्म्यनुसारित्वमुक्तम् । तदाश्रित्य सन्दिह्यते, किं

रश्म्यनुसारित्वमहर्मृतस्यैव भवत्युत रात्रावपीति। पूर्वपक्षे रात्रौ मृतस्य सूर्योदयापेक्षा, सिद्धान्ते तदनपेक्षयैव ब्रह्मलोकप्राप्तिरिति फलम्॥

तत्राहनि रात्रौ वा मृतो रश्म्यनुसारीति सिद्धान्ते प्रतिज्ञा। तामाक्षिप्य समाधत्ते।

## निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च॥ ४। २। १९॥

अहनि सूर्यरश्मिनाडीसम्बन्धस्य सत्त्वात्तत्रैव मृतो रश्म्यनुसारी, निशि तु न भवति तदसत्त्वात्, इति चेन्न, नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वात्। यावद्देहभावित्वं च श्रुतिर्दर्शयति "अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः" इति। प्रतायन्ते विस्तृता भवन्ति रश्मयः। सृप्ताः सम्बद्धाः। नन्वत्र सम्बन्धः श्रुतो, न तस्य यावद्देहभावित्वम्, इत्याशङ्क्य प्रमाणान्तरसूचकः सूत्रे चकारः प्रयुक्तः। रात्रावप्यौष्ण्यस्य देहे दर्शनाद्रश्मिसम्बन्धोऽनुमेय इति। तस्मादहनि रात्रौ वा मृतो विद्वानविलम्बेनैव रश्म्यनुसारीति सिद्धम्॥

## अतश्चायने ऽपि दक्षिणे॥ ४। २। २०॥

किं दक्षिणायने मृतो विद्वान्विद्याफलं प्राप्नोति न वेति सन्देहे, उत्तरायणमाहात्म्यप्रसिद्धेर्भीष्मस्य तत्प्रतीक्षादर्शनाच्च न प्राप्नोतीति प्राप्ते, अतिदिशति पूर्वन्यायं "अतश्च" इति। अत एव च कालान्तरप्रतीक्षाऽनुपपत्तेर्विद्याया नित्यवत्फलसम्बन्धश्रवणात्, दक्षिणेऽप्ययने मृतो विद्वान्फलमाप्नोत्येवेत्यर्थः। अविदुषामुत्तरायणं

प्रशस्तमित्यभिवदनरूपसदाचारे प्रवृत्त्यर्थं पितृप्रसाद-लब्धस्वेच्छामरणज्ञापनार्थं वा भीष्मस्य विदुष उत्तरायण प्रतीक्षेति भावः ॥

नन्न भगवद्गीतासु "यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥" इति कालमेव प्रतिज्ञाय, अहरादिकालविशेषस्यानावृत्तये नियतत्वोपदेशात्, कथं रात्रौ दक्षिणायने वा मृतो विद्वाननावृत्तिमाप्नुयादित्यत आह ।

**योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ ४ । २ । २१॥**

योगिनः स्मार्तविद्योपासकान्प्रत्ययमहरादिकालविशेषः स्मर्यते स्मार्तत्वप्रत्यासत्तेः, न श्रौतदहराद्युपासकान्प्रति । नन्वत्र योगो दहराद्युपासनमेवास्तु तत्राह "स्मार्ते" इति । ब्रह्मार्पणबुद्ध्या कृतनित्याग्निहोत्रादिः कर्मयोगः, "अनाश्रितः कर्मफलम्" इत्यादिस्मृतेः । धारणापूर्वकाकर्तृत्वानुभवः साङ्ख्यम्, "इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्" इति स्मृतेः । तथा चैते योगसाङ्ख्ये स्मार्ते एव, न श्रौतविद्यारूपे । तथा च श्रुतिस्मृत्योरर्थभेदान्न श्रौतोपास्तिषु कालनियमः । यदि च श्रुत्युक्तदेवयानपितृयाणयोरेवात्र स्मृतावपि प्रत्यभिज्ञानात्स्मृतौ काल शब्देन तदभिमानिदेवताग्रहणं श्रुतिसमानार्थत्वाय क्रियते, तदाऽहरादिकालाभिमानिदेवतानां सर्वदा सत्वात्र विदुषो मृतौ कालनियमापेक्षेत्यनवद्यम् । तस्माद्यदाकदाचिन्मृतो विद्वान्विद्याफलं प्राप्नोतीति सिद्धम् ॥

इति चतुर्थाध्यायस्य द्वितीयः पादः ॥

एवं सगुणविद्याफलप्राप्तये देवयानमार्गं वक्तुं तदङ्गोत्क्रान्तिचिन्ता कृता । सम्प्रत्यङ्गिनं देवयानमार्गं वक्तुमयं पाद आरभ्यते ।

**अर्चिरादिना तत्प्रथितेः ॥ ४ । ३ । १ ॥**

अस्ति ब्रह्मलोकप्राप्तिहेतौ मार्गे श्रुतीनां विप्रतिपत्तिः । नाडीसम्बद्धरश्मिरूपो मार्गः क्वचिच्छ्रूयते । क्वचित्तु "तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहः" इत्यादावर्च्यादिरूपः । अन्यत्र तु "सूर्यद्वारेण ते विरजाः प्रयान्ति" इति श्रुतम् । 'विरजा' विरजसः, मार्गतत्प्राप्यफलविरोधिविधुरा इत्यर्थः । अत्र श्रुतिविप्रतिपत्त्या संशयः, किं परस्पर भिन्ना एवैते मार्गाः, उतानेकविशेषणयुक्त एक एवेति । पूर्वपक्षे येनकेनचिन्मार्गेण गमनमिति विकल्पः, सिद्धान्ते मार्गैक्याद्विकल्पाभावः, इति बोध्यम् । तत्र प्रकरणभेदान्मार्गभेदः, तथाच विदुषां मृतिकालानियमवन्मार्गानियमः, इति प्राप्ते ब्रूमः । सर्वो हि ब्रह्मलोकप्रेप्सुरर्चिरादिनैकेन मार्गेण गन्तुमर्हति । कुतः । तत्प्रथितेः, तस्यार्चिरादिमार्गस्य पञ्चाग्निविद्याप्रकरणे "ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिषमभिसम्भवन्ती"ति पञ्चाग्न्युपासकस्येवेतरस्यापि सगुणोपासकस्य श्रुतत्वादित्यर्थः । न च प्रकरणभेदान्मार्गभेदः, सर्वत्रार्चिराद्येकदेशप्रत्यभिज्ञानाद्गन्तव्यब्रह्मलोकाभेदाच्च सर्वत्र सर्वविशेषणोपसंहारेणानेकविशेषणयुक्तमार्गैक्यावगमात् । तस्माद्ब्रह्मलोकप्राप्तिहेतुर्मार्गः सर्वेषामेक एवेति सिद्धम् ॥

**वायुमब्दादविशेषविशेषाभ्याम् ॥ ४ । ३ । २ ॥**

सर्वेषां मार्गविशेषणानां ग्रथनप्रकारः कथ्यते । "स

एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक" मिति कौषीतकिनो देवयानं मार्गमामनन्ति। स विद्वांस्तत्तल्लोकं प्राप्तस्तत्तल्लोकस्वामिनाऽग्न्यादिना नीयत इत्यर्थः । छान्दोग्यास्त्वेवमधीयते, "तेऽर्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेतिमासांस्तान्,मासेभ्यः संवत्सरं संवत्सरादादित्य"मिति । उदङ्ङादित्यो यान्षण्मासानेति तानिति योजना । अत्र श्रुतिद्वयेऽप्यग्निरादौ पठितः। अनन्तरं च कौषीतकिश्रुतौ वायुः श्रुतः । सोऽर्चिरादिमार्गे कस्मादनन्तरं ग्रथितव्य इति सन्देहे, सर्वत्रार्चिराद्येकदेशप्रत्यभिज्ञानान्मार्गैक्यवत्, अग्न्यनन्तरं वायोः प्रत्यभिज्ञानात्तत्रैव तस्य प्रवेशः, इति प्राप्ते, ब्रूमः । अब्दात्संवत्सरादनन्तरमादित्यात्पूर्वं वायुमभिसंविशन्ति गन्तारः, अविशेषविशेषाभ्याम् । कौषीतकिश्रुतौ वायोः कुतश्चिदानन्तर्यं पूर्वत्वं वा विशेषो न ज्ञायते, तद्बोधकपदाभावात् । बृहदारण्यके त्वादित्यात्पूर्वत्वं विशेषो दृश्यते "यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छती"ति । पुरुषो ध्याता । लोको देहः । प्रैति, तदेति शेषः । तस्मै प्राप्ताय ध्यात्रे स वायुस्तत्र स्वात्मनि विजिहीते छिद्रं करोति, यथा रथचक्रस्यच्छिद्रम् । तेन वायुदत्तच्छिद्रेण द्वारेणोर्ध्वमाक्रमते स ध्याता । कऊर्ध्वंस्तमाह "आदित्य"मिति । तथा च "तेने"ति श्रुत्याऽऽदित्यगमनहेतुत्वश्रवणस्य हेतोर्वायोः पूर्वत्वस्यादित्यादवगमात्, अग्न्यनन्तरपाठस्य बाधः । अत्रैवं क्रमो निरूपणः ।

नाड्योरश्मिप्रवेशानन्तरमर्चिरादिसंवत्सरान्तं गच्छति विद्वान् छान्दोग्यश्रुत्यनुसारात् । बृहदारण्यके मासानन्तरं देवलोकश्रवणेऽपि छान्दोग्यश्रुत्या मासानन्तरं संवत्सरस्यैव प्रवेशः, तस्य मासावयवित्वेन योग्यत्वात् । संवत्सरानन्तरं देवलोकस्य देवलोकाच्चायोर्वायोरादित्यस्यादित्याच्चन्द्रमसश्चन्द्रात्तटिल्लोकस्य प्रवेशः । तथा च सूत्रे वायुपदं देवलोकोपलक्षकम् । अब्दादनन्तरं देवलोकसहितं वायुमागच्छति विद्वानिति सूत्रार्थः ॥

एवमग्न्यनन्तरश्रुतवायोः स्थानमुक्त्वा तत्रैव कौषीतकिश्रुतौ वाय्वनन्तरश्रुतवरुणादीनामर्चिरादिमार्गे स्थानमाह ।

तटितोऽधि वरुणः सम्बन्धात् ॥ ४ । ३ । ३ ॥

किं कौषीतकिवाक्ये श्रुतो वरुणोऽर्चिरादिमार्गे सम्बध्यते न वेति सन्देहे, स्थानबोधकमानाभावान्न सम्बध्यते, इति प्राप्ते, ब्रूमः । तटितोऽधि विद्युल्लोकादुपरि वरुणस्सम्बध्यते । कुतः । सम्बन्धात् । तटित उपरि हि सजला मेघा दृश्यन्ते, जलाधिपतिश्च वरुणः, इति तटिद्वरुणयोः सम्बन्धादित्यर्थः । वरुणानन्तरमिन्द्रादेः प्रवेशः, कौषीतकिनां पाठक्रमे बाधकाभावादिति ॥

एवमर्चिरादीनां क्रमं निरूप्य, तेषामेव स्वरूपं निरूपयति ।

आतिवाहिकास्तल्लिङ्गात् ॥ ४ । ३ । ४ ॥

किमेतेऽर्चिरादयो मार्गचिह्नभूताः, उत गन्तॄणां पितॄणां भोगभूमयः, आहोस्विदातिवाहिकाः, इति संशयः । तत्रार्चिरादीनां वृक्षनद्यादिवन्मार्गचिह्नत्वम्, 'अग्निलोक' 'वायुलोक' इत्यादिलोकशब्दश्रवणाद्भोगभूमित्वं

चेति प्राप्ते, ब्रूमः । एतेऽर्चिरादय आतिवाहिकाः कार्यब्रह्मगन्तॄणां विदुषां गमयितारः। कुतः। तल्लिङ्गात्, "अमानवः स एतान्ब्रह्म गमयती"त्यमानवपुरुषस्य विद्युल्लोकं प्राप्तानुपासकान्प्रति गमयितृत्वश्रवणादित्यर्थः । न च यस्य गमयितृत्वं श्रुतं तस्यैव तदिति वाच्यम्, तस्य वाक्यस्यार्चिरादिमानवपुरुषसमभिव्याहारप्राप्तमानवत्वनिवृत्तिपरत्वेन सिद्धवद्गमयितृत्वानुवादकत्वात् । अतः सिद्धवद्गमयितृत्वदर्शनाल्लिङ्गात्पूर्वेषामर्चिरादीनां पुरुषाणां नेतृत्वमिति । न च लोकशब्दमात्रेण भोगभूमित्वमिति युक्तम्, लीनेन्द्रियाणां विदुषां भोगायोगात् । तस्मादग्निस्वामिकं लोकं प्राप्य, तेनाग्निनाऽऽतिवाहिकेनाहर्दिवं प्राप्नोति, तेन च देवतान्तरमिति योज्यम् ॥

ननु लिङ्गमात्रं न पूर्वेषां नेतृत्वगमकं, न्यायाभावात्, इत्यत आह ।

उभयव्यामोहात्तत्सिद्धेः ॥ ४ । ३ । ५ ॥

यद्यर्चिरादयोऽचेतनास्तदा विदुषामपि निर्देशानां लीनेन्द्रियाणां ज्ञानाभावेनोभयोर्विद्वदर्चिराद्योर्व्यामोहादज्ञत्वात्कार्यब्रह्मप्राप्तिर्न स्यात् । लोके हि मूर्च्छितो पथहीनो पथवद्भिश्चेतनान्तरैर्नीयते, नाचेतनैः । अतो पथहीनश्चेतनश्चेतनान्तरैर्नीयत इति न्यायसहितात्लिङ्गात्पूर्वेषामर्चिरादीनां देवानां तत्सिद्धेर्नेतृत्वसिद्धेः, न न्यायहीनं लिङ्गम् । अर्चिरादीनां देव ये, रात्रौ दक्षिणायने वा मृतस्य विदुषो ब्रह्मलोकगतिर्युक्ततरा भवति, देवानां सदा सत्त्वादिति ॥

ननु नार्चिरादीनां नेतृत्वं, विद्युल्लोकादमानवपुरुषस्यैव नेतृत्वश्रवणात्, वरुणादीनां नेतृत्वायोगात्, इत्यत आह ।

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४ । ३ । ६ ॥

अमानवः पुरुषो विद्युल्लोकमागतो वैद्युतः । तेनैव ततो विद्युत्प्राप्तेरूर्ध्वं नीयमाना विद्वांसः कार्यं ब्रह्म प्राप्नुवन्ति, 'अमानव एत्य ब्रह्मलोकान्गमयति विद्युल्लोकस्थान्' इत्यमानवस्यैव गमयितृत्वश्रवणात् । अमानवोपसर्जनत्वेन वरुणादीनां नेतृत्वं, न प्राधान्येन । अर्चिरादिविद्युदन्तानां प्राधान्येनैव नेतृत्वम् । तस्मादर्चिरादयो नेतार इति सिद्धम् ॥

एवं गन्तव्यप्राप्तिहेतुं मार्गं निरूप्य फलभूतं गन्तव्यं निरूपयति ।

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ४ । ३ । ७ ॥

"स एनान्ब्रह्म गमयती"त्यत्र संशयः, किं परं निर्गुणं ब्रह्म गमयत्यमानवः पुरुषः, उत कार्यं सगुणं ब्रह्मेति । पूर्वपक्षेऽर्चिरादिगत्या ब्रह्मलोकप्राप्त्यनन्तरं विदुषो लिङ्गशरीरलयेन परब्रह्मप्राप्तिः, सिद्धान्ते कार्यब्रह्मप्राप्त्यर्थमेव गतिर्न परब्रह्मप्राप्त्यर्थम्, इति मन्तव्यम् । उत्तरत्र पूर्वपक्षविन्यासादौ सिद्धान्तमाह "कार्य"मिति । कार्यमेव ब्रह्म गमयतीति बादरिराचार्यो मन्यते । कुतः । अस्य कार्यब्रह्मणः परिच्छिन्नस्य गत्युपपत्तेर्गन्तव्यत्वोपपत्तेः, प्रत्यग्रूपस्यापरिच्छिन्नस्य परस्य तदनुपपत्तेः, इत्यर्थः ॥

## विशेषितत्वाच्च ॥ ४ । ३ । ८ ॥

"ब्रह्मलोकान्गमयती"ति श्रुत्यन्तरे बहुवचनेन गन्तव्यब्रह्मणो विशेषितत्वात्सावयवस्यावयवभेदेन भिन्नस्य ब्रह्मण एव गन्तव्यत्वं, न निर्विशेषब्रह्मणः । लोकशब्दाच्च भोगभूमेरेव प्राप्यत्वं, न परस्येति चकारार्थः ॥

ननु नपुंसकस्य ब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात्कथं कार्यब्रह्मणि "ब्रह्म गमयती"ति व्यपदेशः, तत्राह।

**सामीप्यात्तु तद्व्यपदेशः ॥ ४ । ३ । ९ ॥**

"तु" शङ्कानिरासार्थः। परमेव हि ब्रह्म सत्यकामत्वादिगुणयुक्तं कार्यब्रह्मेत्युच्यते। तथा च कार्यब्रह्मणः कारणपरब्रह्मसामीप्यात्कार्ये मुख्यस्य ब्रह्मपदस्य कार्ये व्यपदेशो लक्षणया प्रयोग इत्यर्थः। मुख्यासम्भवादिति भावः॥

ननु कार्यब्रह्मप्राप्तौ तेषां न पुनरावृत्तिरिति श्रुतिविरोधः, तत्राह।

**कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ४ । ३ । १० ॥**

कार्यब्रह्मलोकस्यात्यये नाशे सति तदध्यक्षेण तल्लोकस्वामिना हिरण्यगर्भेण सहातः कार्यब्रह्मणः परं ब्रह्म प्राप्नुवन्त्युत्पन्नात्मसाक्षात्कारा विद्वांस इत्युक्तश्रुत्यभिधानादवगन्तव्यमित्यर्थः॥

**स्मृतेश्च ॥ ४ । ३ । ११ ॥**

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥" इति स्मृतिश्च ब्रह्मलोकं प्राप्तानां क्रममुक्तिं दर्शयति। अतोऽपि नानावृत्तिश्रुतिविरोधः। प्रतिसञ्चरो महाप्रलयः। तस्मिन्प्राप्ते परस्य हिरण्यगर्भस्यान्तेऽधिकारसमाप्तिः। तदा कृतात्मानः शुद्धधियो ब्रह्मलोकवासिनः परं पदं प्राप्नुवन्तीति योजना। तस्मात्कार्यब्रह्मप्राप्त्यर्थमेवार्चिरादिगतिः, न प्रत्यग्रूपपर-

त्क्रतुः । तथा च यो यदुपासकः स तत्प्राप्नोतीति श्रुतिस्मृतिसिद्धत्वात्तदुपासकानामेव कार्यब्रह्मप्राप्तिरित्यर्थः । प्रतीकोपासनेषु नामब्रह्मेत्यादिषु ब्रह्मणः प्रतीकं प्रति विशेषणत्वेन प्रतीकस्यैव प्राधान्यान्न तदुपासकानां ब्रह्मोपासकत्वम् । पञ्चाग्न्युपासकानां त्वब्रह्मोपासकत्वेऽपि श्रुतिबलाद्ब्रह्मप्राप्तिरिति ॥

## विशेषं च दर्शयति ॥ ४ । ३ । १६ ॥

किञ्च "यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवती"ति नामप्रतीकोपासनफलादुत्तरोत्तरवागाद्युपासनानामुत्कृष्टफलविशेषं दर्शयति श्रुतिः "वाग्वाव नाम्नो भूयसी"त्याद्या । अयं फलविशेषः प्रतीकानामुत्कर्षापकर्षवत्तामुपास्यत्वे युज्यते, न तु सर्वत्रैकस्य ब्रह्मण उपास्यत्वे । तस्माद्ब्रह्मोपासकानामेव ब्रह्मप्राप्तिः, न प्रतीकोपासकानामिति सिद्धम् ॥

इति चतुर्थाध्यायस्य तृतीयः पादः ॥

---

एवं सगुणब्रह्मविदां प्राप्यमुक्त्वा निर्गुणब्रह्मविदां प्राप्यमाह ।

## सम्पद्याविर्भावः स्वेन शब्दात् ॥ ४ । ४ । १ ॥

"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रूयते । तत्र संशयः, यथा सुकृतिनः स्वीयेन रूपान्तरेणाफलेनाभिनिष्पत्तिस्तथा निर्गुणविदोऽभिनिष्पत्तिः, उतात्ममात्रेणाभिनिष्पत्तिरिति । पूर्वपक्षे स्वर्गमोक्षयोरविशेषः, सिद्धान्ते [illegible] इति फलम् । अत्र फलनिरूपणादध्यायपादसङ्ग-

त्योः स्फुटत्वम् । तत्र स्वर्गवन्मोक्षस्याभिनिष्पत्तिः, फलस्याविशेषात्, इति प्राप्ते भ्रमः । संपद्य स्वप्रकाशमात्मानं साक्षादनुभूय तेनैवात्ममात्रेणाविर्भावोऽवस्थानवान्भवति मुक्तः । कुतः । "स्वेन रूपेणाभिनिष्पद्यते" इति स्वशब्दादित्यर्थः । फलत्वहेतुकानुमानं मोक्षनित्यत्वश्रुतिबाधितमिति ॥

ननु स्वरूपात्मकमोक्षस्य सदा सत्त्वात्कः पुनः पूर्वावस्थातो विशेष इत्यत आह ।

मुक्तः प्रतिज्ञानात् ॥ ४ । ४ । २ ॥

यः स्वरूपेणाभिनिष्पद्यते स सर्वानर्थविनिर्मुक्तः स्वप्रकाशनिरतिशयानन्दात्मनाऽवतिष्ठते । पूर्वत्र तु, अवस्थात्रयकलुषितः संसारी चेति विशेषः । ननु स्वरूपाभिनिष्पन्नो मुक्त इति कुतोऽवगम्यते, तत्राह "प्रतिज्ञाना"दिति । "य आत्माऽपहतपाप्मे"त्युपक्रम्य "एतं त्वेव ते भूयोऽनुव्याख्यास्यामी"ति सकलदोषमुक्तस्यैवात्मनो व्याख्येयत्वेन प्रतिज्ञानादित्यर्थः ॥

ननु कार्यज्योतिरुपसम्पन्नस्य कथं मुक्तत्वमित्यत आह ।

आत्मा प्रकरणात् ॥ ४ । ४ । ३ ॥

अत्र ज्योतिरात्मैव, न भौतिकं तेजः, "य आत्माऽपहतपाप्मे' त्यात्मप्रकरणादित्यर्थः ॥

अविभागेन दृष्टत्वात् ॥ ४ । ४ । ४ ॥

परं ज्योतिरुपसङ्क्रम्य मुक्तो विद्वानित्युक्तम् । तं मुक्तमुपजीव्य सन्दिह्यते, किं मुक्तो ब्रह्मभिन्नत्वेनावतिष्ठते, उत ब्रह्माविभागेनेति । तत्र भिन्नत्वेनेति प्राप्तिं

धारयति "अविभागेने"ति। निरतिशयानन्दब्रह्मात्मनैवावतिष्ठते मुक्तः। कुतः। दृष्टत्वात् "ब्रह्मैव सन्ब्रह्माप्येति" "तत्त्वमसी"त्यादि श्रुतिष्वभेदस्य दृष्टत्वादित्यर्थः॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः॥ ४।४।५॥

पूर्वसिद्धं ब्रह्माभिन्नं मुक्तमुपजीव्य सन्दिह्यते, स मुक्तो ब्रह्मात्मकः किं सत्येन सर्वज्ञत्वादिप्रपञ्चेन सहावतिष्ठते, उत शशविषाणवदसन्नेव सर्वज्ञत्वादिरिति सच्चिन्मात्रेणावतिष्ठते, आहोस्विद्वस्तुतो निष्प्रपञ्चोऽपि व्यावहारिकसर्वज्ञत्वादिमानिति। अत्राद्यपूर्वपक्षमाह "ब्राह्मेणे"ति। ब्रह्मसम्बन्धिना सत्येन सर्वज्ञत्वादिना सहावतिष्ठते ब्रह्मात्मको मुक्त इति जैमिनिराचार्यो मन्यते। कुतः। उपन्यासविधिव्यपदेशेभ्यः। उपन्यास उद्देशः। स च "सोऽन्वेष्टव्य" इत्यादिविधानार्थमागतो "य आत्माऽपहतपाप्मे"त्यादिरूपः। विधिरज्ञातज्ञापनम्। स च "तस्य सर्वेषु लोकेषु कामचारो भवती"त्यादिरूपः। उद्देशविधिविलक्षणो व्यपदेशः। स च "सर्वज्ञः सर्वेश्वर" इत्यादिरूपः। अयं हि नोद्देशः, विध्यभावात्। नापि विधिः, सिद्धवन्निर्देशात्। अत एभ्यो हेतुभ्यः सप्रपञ्च एवास्तीति॥

इत्यादि शब्दा निरर्थका एव प्रयुज्यन्ते, इत्यौडुलोमिराचार्यो मन्यते । सर्वज्ञत्वादिधर्माणामसम्भवाद्धर्मिस्वरूपादत्यन्तभिन्नत्वेऽत्यन्ताभिन्नत्वे वा तेषां गवाश्वधर्मिवद्धर्मत्वानुपपत्तिरिति प्राप्ते–॥

सिद्धान्तयति ।

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ४ । ४ । ७ ॥**

एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि पूर्वोक्तोपन्यासादिभ्यः पूर्वस्य ब्रह्मस्वरूपस्य सर्वज्ञत्वादेर्व्यावहारिकस्य भावाद्ब्रह्मणो मुक्तात्मनः सप्रपञ्चत्वनिष्प्रपञ्चत्वयोरविरोधं बादरायण आचार्यो मन्यते, आविद्यकसर्वधर्माणां सर्वज्ञत्वादीनामुपपत्तेः न तेषां तुच्छत्वमिति । अत एव सर्वात्मनाऽविद्यानिवृत्तौ विदेहके वल्यं निष्प्रपञ्चमेव । एतदभिप्रेत्योक्तं भगवता भाष्यकारेण "व्यवहारापेक्षये"ति । न ह्यौपनिषदानां मोक्षेऽपि व्यवहृतिर्मता, मूलाभावात्, इति भावः ॥

एवं परविद्याफलमभिधायापरविद्याफलं प्रपञ्चयितुमुपक्रमते ॥

**सङ्कल्पादेव तु तच्छ्रुतेः ॥ ४ । ४ । ८ ॥**

दहरविद्यायां श्रूयते "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति" त्यादि । तत्र संशयः, किं ब्रह्मलोकस्थस्य विदुषो भोगहेतवः पित्रादयः सङ्कल्पादेव सिध्यन्ति, उत यत्नान्तरसहकृतात्सङ्कल्पादिति । तत्र लोके भोगसाधनस्य प्रयत्नसाध्यत्वदर्शनादत्रापि यत्नसापेक्षेच्छात एव ब्रह्मभूतस्य विदुषो विभूतिसिद्धिः, न केवलेच्छातः, इति प्राप्ते, ब्रूमः । सङ्कल्पादेवास्य विदुषः पित्रादिविभूतिप्राप्तिः । कुतः । साधनान्तरनिराकाङ्क्षया श्रुतेः । श्रुत्या च लौकिकानु-

मानस्य बाध इति । किञ्च यदि सङ्कल्पः साधनान्तरसापेक्षस्तर्हि तदभावे विदुषो वन्ध्यसङ्कल्पत्वापत्तौ सत्यसङ्कल्पत्वं न स्यात् । सङ्कल्पानुगुणसाधनान्तरमिष्टमेवेति ॥

**अत एव चानन्याधिपतिः ॥ ४ । ४ । ९ ॥**

अत एव सत्यसङ्कल्पत्वादेव विद्वाननन्याधिपतिर्भवति । यदि विदुषः कश्चनाधिपतिः स्यात्तर्हि तदधीनभोगस्य सङ्कल्पमात्रसाध्यत्वाभावात्सत्यसङ्कल्पत्वं न स्यात् । तस्मादीश्वरात्मकस्य विदुषः सङ्कल्पादेव सर्वैश्वर्यप्राप्तिरिति सिद्धम् ॥

**अभावं बादरिराह ह्येवम् ॥ ४ । ४ । १० ॥**

"सङ्कल्पादेवे"ति श्रुत्या विदुषस्तावन्मनोऽस्तीत्यवगतम् । शरीरेन्द्रियाणि सन्ति, उत न सन्ति, आहोस्वित्सन्ति न सन्ति च, इति सन्देहे,-यथा "सङ्कल्पादेवे"त्यवधारणश्रुत्या साधनान्तराभावस्तथा बादरिराचार्यः शरीरेन्द्रियाणामभावं मन्यते । आह ह्येवमाम्नायः "मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके" इति । यदि विदुषः शरीरादिकं स्यात्तदा मनसेति विशेषणमन्ययोगव्यवच्छेदकमवधारणपरं नोक्तेत्येकः पूर्वपक्षः ॥

पूर्वपक्षान्तरमाह ।

**भावं जैमिनिर्विकल्पामननात् ॥ ४ । ४ । ११ ॥**

शरीरेन्द्रियाणां मनस इव भावं सत्तां जैमिनिराचार्यो मन्यते "स एकधा भवति त्रिधा भवती" त्यादिना विदुषोऽनेकधाभावविकल्पाम्ननात् । न हि शरीरभेदं विना कदाचिदेकधाभावः कदाचित्त्रिधाभाव इत्याद्यनेकधाभावविकल्पः सम्भवतीति भावः ॥

सिद्धान्तमाह—

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥ ४ । ४ । १२ ॥**

अत एव मनसेति विशेषणाद्विकल्पाऽऽमननाच्चेति लिङ्गद्वयात् । यदा शरीरादिसङ्कल्पस्तदा सशरीरेन्द्रियत्वम् । यदा तु तत्सङ्कल्पाऽभावस्तदा शरीरेन्द्रियराहित्यमित्युभयविधं विदुष ऐश्वर्यं बादरायण आचार्यो मन्यते ॥ द्वादशाहवत् ॥ यथा द्वादशाहमृद्धिकामाः उपेयुरिति उपेयचोदनागम्यत्वाद् द्वादशाहस्य सत्रत्वं द्वादशाहेन प्रजाकामं याजयेदित्यहर्गणत्वे सति यजतिचोदनागम्यत्वाद्हीनत्वं चेत्युभयविधत्वं तद्वदित्यर्थः ॥

ननु विदुषः शरीराद्यभावे कथं भोगस्तत्राह—

**तन्वभावे सन्ध्यवदुपपत्तेः ॥ ४ । ४ । १३ ॥**

तनोः सेन्द्रियशरीरस्याऽभावकाले सन्ध्यवत् । यथा स्वप्ने मानसिकविषयभोगो जाग्रद्भोगविलक्षणस्तद्वद्भोगः । कुतः । मनसैतान् कामान् पश्यन् रमत इति श्रुतेर्भोगे साधनान्तरं वारयन्त्या एवमेवोपपत्तेरित्यर्थः ॥

ननु देहाद्यभावेऽपि भोगसत्त्वे सशरीरताङ्गीकारो व्यर्थस्तत्राह—

**भावे जाग्रद्वत् ॥ ४ । ४ । १४ ॥**

देहादिभावकाले जाग्रद्वद्भोगः, स्वप्नभोगविलक्षणो भवतीत्यर्थः ॥

ननु विकल्पामननलिङ्गेन विदुषोऽनेकशरीराणि स-

न्तीत्युक्तं तद् व्यर्थं निरात्मकेषु तेषु भोगायोगादित्या-
क्षेपे इदमाह—

**प्रदीपवदावेशस्तथाहि दर्शयति ॥ ४ । ४ । १५ ॥**

किं विदुषा सृज्यमानानि शरीराणि दारुयन्त्रवन्नि-
रात्मकानि? उत, अस्मदादिदेहवत् सात्मकानीति संदेहः ।
पूर्वपक्षे विदुष एकस्मिन्नेव देहे भोगः फलं, सिद्धान्ते सर्वे-
ष्वपीति बोध्यम् । तत्राऽनाद्यन्तःकरणपरिच्छिन्नस्य भो-
क्तुर्विदुषः शरीरान्तरेषु प्रवेशायोगान्निरात्मकानीति
प्राप्ते, ब्रूमः । विदुषा सृज्यमानेषु सेन्द्रियमनःसु बहुषु
देहेषु विदुषआवेशोऽभिव्यक्तिर्विद्यासामर्थ्यादुपपद्यते ।
पुरातनान्तःकरणपरिच्छेदस्य विद्वांसं योगसामर्थ्याद्व्या-
पकं प्रत्यप्रतिबन्धकत्वात् प्रदीपवत् । यथा प्रदीप एको-
ऽनेकवर्तिषु प्रविशति, तथा विद्वाननेकागन्तुकान्तःकरण-
द्वारा देहेषु प्रविशति । तथाहि दर्शयति शास्त्रम्—एकधा
भवति त्रिधा भवति पञ्चधा सप्तधा नवधेत्यादि । यद्यपि
विदुषः सर्वेषु देहेषु एकत्वं, दीपानां तु भिन्नत्वमिति वैष-
म्यमस्ति, तथाप्युत्पादकदीपगतैक्यं सादृश्यादुत्पन्नदीपेष्व-
पचर्यते इति साम्यं बोध्यम् । तस्मात् सर्वाणि शरीराणि
सात्मकान्येव ॥

ननु विदुषो न शरीरवत्त्वं युक्तं "तत्केन कं पश्येत्"
इति, न तु तद्द्वितीयमस्ति "ततोऽन्यद्विभक्तं यत् पश्ये-
त्" इति च विशेषविज्ञानाऽभावश्रवणादित्यत आह—

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ ४ । ४ । १६ ॥**

सुषुप्तिपरममुक्त्योरन्यतरापेक्षयेदं विशेषविज्ञाना-

भावश्रवणम् । हि यतः प्रकरणादेवमाविष्कृतं सुषुप्तिप्रकरणे, न तु तद्‌द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदित्यादिश्रुतं परममुक्त्यपेक्षया च तत्केनेत्यादि । तस्मादिदं सगुणविदः शरीराङ्गीकारे बाधकमित्यर्थः । तत्र सुषुप्तौ द्वितीयं विभक्तं न स्वस्तीत्यर्थः ॥

## जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ ४ । ४ । १७ ॥

पूर्वं सङ्कल्पमात्रेण देहादिसर्गे यदैश्वर्यमुक्तं विदुषः तस्य जगदुत्पत्त्यादावपवादोऽत्र क्रियते । किं विदुष, ऐश्वर्यमीश्वरस्येव निरङ्कुशमुत, सातिशयमिति संशयः । पूर्वपक्षे ईश्वरनानात्वं, सिद्धान्ते तदैक्यमिति बोध्यम् । तत्र विदुषोऽनन्याधिपतित्वान्निरङ्कुशमैश्वर्यमिति प्राप्ते ब्रूमः । जगदुत्पत्त्यादिव्यापारवर्जं सातिशयमेवाणिमाद्यैश्वर्यं विदुषः । जगद्व्यापारस्तु परमेश्वरस्यैव । सृष्ट्यादिविषयेषु सर्वत्र तस्यैव प्रकरणात् । विदुषश्च तत्राऽसन्निहितत्वात् । नित्यसिद्धं हि परमेश्वरस्य निरङ्कुशमैश्वर्यं, कथं वा विदुष ईश्वरप्रसादायत्तमागन्तुकमैश्वर्यं निरङ्कुशमिति वक्तुं शक्यम् । तस्मात् सातिशयमैश्वर्यं विदुषः ॥

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ ४ । ४ । १८ ॥

नन्वाप्नोति स्वाराज्यमिति प्रत्यक्षश्रुत्या ऐश्वर्योपदेशान्निरङ्कुशं विदुष ऐश्वर्यमिति चेन्न । आधिकारिकमण्डलस्थोक्तेः । अधिकारे तत्तद्व्यापारे नियोजयत्यादित्यादीनित्याधिकारिकः सूर्यादिमण्डलस्थः परमात्मा । तस्योत्तरवाक्ये प्राप्नोति मनसस्पतिमित्यत्र प्राप्यत्वेनोक्तेर्वि-

दुषः सातिशयमैश्वर्यमिति गम्यते । यदि पूर्ववाक्ये ऽप्य निरतिशयमैश्वर्यमुक्तं तदेदमीश्वरप्राप्तिवचनं व्यर्थं स्याद्तः सातिशयमैश्वर्यं विदुषः ॥

विकारावर्त्ति च तथाहि स्थितिमाह ॥४।४।१९॥

सगुणे ब्रह्मणि विकाराऽवर्ति च निर्गुणस्वरूपमस्ति। तथाहि ब्रह्मणि सगुणत्वनिर्गुणत्वयोः स्थितिमाह श्रुतिः । एतावानस्य महिमेति सगुणत्वमुक्त्वा, अतो ज्यायाँश्च पूरुष इति निर्गुणत्वमाह । एतावान् सहस्रशीर्षेत्यादिरस्य परस्य महिमा विभूतिरित्यर्थः । अयं भावः । यथा सगुणे स्थितं निर्गुणस्वरूपमुपासको न प्राप्नोति । तदुपासकत्वाभावात् । तथा तद्गतजगत्स्रष्टृत्वादिकमैश्वर्यं न प्राप्नोति तदुपास्त्यभावात् । उपास्त्यभावश्च श्रुत्यभावादिति ॥

अत्र दृष्टान्तार्थं यन्निर्गुणस्वरूपमुक्तं तत्र प्रमाणान्तरमाह—

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ ४ । ४ । २० ॥

एवं ब्रह्मणो निर्गुणत्व श्रुतिस्मृती दर्शयतः । न तत्र सूर्यो भाति न चन्द्रतारकमित्याद्या श्रुतिः । न तद्भासयते सूर्य इत्याद्या स्मृतिरिति ॥

भोगमात्रसाम्य लिङ्गाच्च ॥ ४ । ४ । २१ ॥

उपासकस्योपास्यदेवतया सह भोगमात्रेण साम्यं श्रुतं, न जगद्व्यापारेण । तथाहाऽऽपो वै खलु मीयन्ते लोकोऽसाविति । तस्माल्लिङ्गाद्विदुष साऽतिशयमैश्वर्यं गम्यत इत्यर्थः । तं ब्रह्मलोकस्थमुपासकं हिरण्यगर्भ आह ।

आपो वै खल्वमृतमापो मया मीयन्ते भुज्यन्ते । तथाप्यसावमृतोदकलक्षणो लोको भोग्य इत्यर्थः ॥

यदीश्वरैश्वर्येणातिशयेन सहितं विदुष ऐश्वर्यं सोऽतिशयं तर्हि लौकिकैश्वर्यवदनित्यं स्यात् । तथाच विदुषोऽप्यावृत्तिः प्रसज्ज्येतेत्याशङ्क्य दयासिन्धुर्भगवान् बादरायणः समाधत्ते—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ ४ । ४ । २२ ॥

येऽर्चिरादिमार्गेण ब्रह्मलोकं प्राप्तास्तेषामनावृत्तिरेव । तेषां न पुनरावृत्तिरित्यादिमुक्त्यभिधायकशब्दादित्यर्थः । निर्गुणब्रह्मविदाम् आवृत्तिशङ्कैव नास्ति । यतः सगुणविदामपि निर्गुणाश्रयणेनैवाऽनावृत्तिः, नान्यथा । तस्माद्ब्रह्मविदां निरस्ताऽनर्थव्रातस्वप्रभनिरतिशयानन्दब्रह्मात्मनाऽवस्थितिरिति सिद्धम् । सूत्रावृत्तिः शास्त्रसमाप्तिद्योतनार्था ॥

यः सर्वश्रुतिषन्दिवन्दिततनुर्मायात्मनिद्रां गतः
सुप्तोऽस्मिन् भवपत्तनेऽपरिमिते कल्पान्ततल्पान्तरे ।
यः सर्वाऽपरिपन्थिसाङ्गनयतः प्रज्ञाप्रवाहान्ततः
प्रज्ञालभ्यसुखाकृतिः कृतिमिमां रामः स गृह्णातु नः॥१॥

विदुषां कण्ठभूषेयं कृता वृत्तिर्मया प्रभो ॥
व्यासवाङ्मणि संदृब्धा, प्रीतये तेऽस्तु सर्वदा ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाऽऽचार्यश्रीमन्मुकुन्दगोविन्दश्रीचरणशिक्षितश्रीरामानन्दसरस्वतीकृतौ ब्रह्मसूत्रवृत्तौ ब्रह्माऽमृतवर्षिण्यां चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥ ४ ॥